M-2871

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/ अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विकम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| कठवल्युपनिषद् भाष्य | शिव नारायण | वेदांग | पूर्ण | | 6/12 | 67 | संस्कृत | कागद | | | | |

॥श्रीकृष्णानंदरामसमर्थ॥ श्रीक्षेत्रकाशि देणारे भगवद्भक्त शिवनारायण मीश्र भाद्रपद वद्य ५ शके १८१५

नंबर १२

॥ अथ सटीककठवल्ल्युपनिषद्भाष्यप्रारम्भः ॥

॥श्रीगणेशायनमः॥ब्रह्माद्वयंपरानंदंधर्माद्दीनामगोचरं॥ कार्यकारणनिर्मुक्तंशिवंपरमुपास्महे॥१॥ नत्वादेवसुमाजानिंस्मृत्वागुरुपदाम्बुजं॥ ध्यात्वागौरीमहंकुर्वेकठभाष्यविवेचनं॥२॥ कभाष्यमतिगंभीरंक्वचाहंमंदबुद्धिगः॥ तथापिगुरुवर्याणांपादसंस्मृतितोयते॥३॥ भगवान्भाष्यकारोयमनचिकेतःसंवादरूपेणप्रवृत्ताःकठवल्लीर्व्याचिख्यासुश्चिकीर्षितस्यभाष्यस्यनिर्विघ्नप्रचयगमनादिप्रयोजनायब्रह्मविद्याचार्यनतिलक्षणंमंगलमाचरन्नादौयमंनमस्करोति॥ नमइतिमृत्यवेनमइत्यन्वयः। ननुनयमोनमस्कार्यो मारयतीतिमृत्युरितिव्युत्पत्याभूतयातनादिकर्तृत्वेनदोषवत्वान्निर्दुष्टोह्याचार्योनामभवतीत्याशंक्याह॥भगवतइति॥उत्पत्तिंचविनाशंचभूतानामागतिंगतिं॥वेत्तिविद्यामविद्यांचसवाच्योभगवानितिस्मृतेर्यमःकरतलीकृतब्रह्मतत्वोपियावदधिकारंयाम्यपदेवर्त्तमानःप्रारब्धमतिवाहयन्नकर्तृब्रह्मात्मतानुभवबलतोभूतयातनादिदोषैरलिप्तस्वभावइतियुक्तंतस्यनमस्कार्यत्वमितिभावः।तस्यहिरण्यगर्भात्मकसूर्यप्रभवत्वेनमहत्वंदर्शयति। वैवस्वतायेतिविवस्वतोपत्यंपुमान्वैवस्वतः।तस्मैवैवस्वतायभगवतेब्रह्मविद्याचार्यायमृत्यवेनमइत्यन्वयः।एवंयमनतिंकृत्वावरप्रदानेनयस्मैयमोनचिकेतसेब्रह्मविद्यांप्राहयस्माच्चब्रह्मविद्यालोकेवृद्धिंगतातंनमस्करोति नचिकेतसइति॥ नमइतिसम्बन्धः।चकारोमंगलहृयसमुच्चयद्वाराभक्तेर्विद्याप्राप्त्यंगत्वसूचकः। यदर्थंमंगलाचरणंकृतंतत्प्रतिजानीते॥अथेत्यादिना॥अथशब्दोमंगलार्थःकाठकोपनिषद्वल्लीनांमृत्युनचिकेतःसंवादपरिसमाप्तिपर्यंताकाठकोपनिषत्तदेकदेशावल्योलताःकल्पलतावदभीष्टफलदाःतासांवृत्तिर्भाष्यंतल्लक्षणसत्वादारभ्यतेप्र

श्रीगणेशायनमः॥ॐनमोभगवतेवैवस्वतायमृत्यवेब्रह्मविद्याचार्यायनचिकेतसेच॥अथकाठकोपनिषद्वल्लीनांसुखार्थप्रबोधनार्थमल्पग्रन्थावृत्तिरारभ्यते।सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्यक्विप्प्रत्ययांतस्यरूपमुपनिषदिति।उपनिषच्छब्देनचव्याचिख्यासितग्रंथप्रतिपाद्यवेद्यवस्तुविषयाविद्योच्यते

क्रम्यतइत्यर्थः।ननुभर्तृप्रपंचादिभिरेवव्याख्यातत्वान्नारंभणीयावृत्तिरित्यतआहाल्पग्रंथेति।अन्येषांशब्दतोबहुत्वादर्थतश्चन्यूनत्वात्तैरगतार्थंभाष्यं अल्पाःग्रंथाःशब्दायस्यासातथोक्ताननुअत्ताचराचरग्रहणादित्यादिभिरधिकरणैरेवनिर्णीतार्थत्वादुपनिषन्नव्याख्येयेत्यतआह॥सुखार्थेति॥सुखेनानायासेनार्थस्यवाक्यार्थस्यप्रबोधनार्थंसम्यग्ज्ञानायपदार्थज्ञानपूर्वकवाक्यार्थज्ञानायेतियावत् ननूपनिषदोवृत्तिर्नारब्धव्याऽधिकारिप्रयोजनविषयसंबंधानामभावात्। तथाहिप्राणिनांकामकलुषितचेतसांउपनिषच्छ्रवणात्पराङ्मुखत्वेनविवेकादिमतोऽधिकारिणोर्दुर्लभत्वादुपनिषद्भिःकर्तृत्वादिविशिष्टजीवस्यासंसारिब्रह्मात्मतायाःप्रतिपादयितुमशक्यत्वेनब्रह्मात्मैक्यविषयाभावादेवप्रयोजनमपिनलभ्यतेबंधस्यसत्यत्वेनविद्यायास्तन्निवर्त्तकत्वायोगात्कर्मभिरेवतन्निवृत्तेःसंभवाच्चातएव संबंधोनेत्याशंक्योपनिषच्छब्दनिर्वचनेनविद्यायाविशिष्टाधिकार्यादिमत्वप्रदर्शनेनतज्जनकग्रंथस्यापिविषयादिमत्वंदर्शयितुमादावुपनिषच्छब्दस्वरूपनिष्पत्तिप्रकारंतावदाह उपनिपूर्वस्येति। शिथिलीकरणप्राप्तिनाशार्थकस्यक्विविति प्रत्ययांतेयस्यतत्तथा।तस्यसदेर्धातोरुपपूर्वस्यरूपंनिष्पन्नशब्दस्वरूपमुपनिषदित्यर्थः।एवमुपनिषच्छब्दस्वरूपंनिरुच्योपनिषदंभोब्रूहीत्यादौब्रह्मविद्यायामुपनिषच्छब्दप्रयोगदर्शनादुपनिषच्छब्देनब्रह्मविद्योच्यतइत्याह। उपनिषच्छब्देनेतिउक्तश्रुतिप्रसिद्धिद्योतकश्चशब्दः।व्याख्यातुमिष्टोग्रंथउपनिषद्रूपस्तस्यप्रतिपाद्यमधिकारिणाश्चवेद्यंयद्वस्तुब्रह्मात्मैक्यंतद्विषयोयस्याःसातथा ननूपनिषच्छब्देनविद्याकिंसमुदायशक्त्याभिधीयतेउतावयवशक्त्यानाद्यःलोकेविद्यायामुपनिषच्छब्दस्यप्रयोगाभावेनसमुदायशक्तेरकॢप्तत्वात्कल्प्यायाश्चकॢप्तावयवशक्त्याबाध्यत्वान्नद्वितीयः॥ ॥ ॥

नि

योगवृत्तेरन्यत्रापिसंभवादितिशंकतेकेनेति। अर्थयोगोऽर्थसंबद्धस्तेनकमर्थसंबंधमादायोपनिषच्छब्देनविद्योच्यतइत्यर्थः उक्तरीत्यानसमुदायार्थोनाप्यवयवार्थइतिभावः षद्लृविशरणगत्यव
सादनेष्विति स्मृतेरुपनिषच्छब्दस्यावयववृत्तिंविद्यायांदर्शयिष्यामीत्याह। उच्यतइति। प्रथममुपशब्दलभ्यार्थमाह। यइतिदृष्टाः प्रत्यक्षेणस्त्रक्चंदनवनितादयः शब्दश्रवणमनुगम्या अनुश्रवि
काः तेचतेविषयाश्चतेभ्यःक्षयिष्णुत्वसातिशयत्वादिभिर्हेतुभिर्विगतातृष्णाआशायेषांतेतथारूपाः संतइदमुपलक्षणंशमादेःमुमुक्षवः मोक्षेच्छवः प्रसिद्धाःशांतोदांतइत्यादौवक्ष्यमाण
लक्षणंस्वरूपंयस्याः सातांविद्यामुपसद्योपगम्यप्राप्येत्यर्थः निशब्दार्थमाह। तन्निष्ठतयेति॥ तस्यांनिष्ठाःनन्यव्यापारतायेषांतेतन्निष्ठास्तेषांभावस्तन्निष्ठतातयानिश्चयेनफ
लावश्यकत्वबुद्ध्याशीलयंत्यसंसार्यैक्यासंभावनांनिरस्यंतिसाक्षात्कारपर्यंतमित्यर्थः॥ धात्वर्थद्वयंसंगृह्णाह। तेषामिति। संसारबीजस्यकर्तृत्वादिकारणस्याविद्यादेरादिपदे
नकामकर्मादिपरिग्रहः विशरणादित्यस्यव्याख्यानंविशसनादितिशिथिलीकरणादित्यर्थः अवसादनार्थमाह। विनाशनादिति। उक्तार्थमुपसंहरतिइत्यनेनेति। उक्तेर्थेश्रुतिंप्र

केनपुनरर्थयोगेनोपनिषच्छब्देनविद्योच्यते अत्रोच्यते। येमुमुक्षवोदृष्टानुश्रविकविषयवितृष्णाः संतउपनिषच्छब्देनवाच्यांवक्ष्यमाणलक्षणांवि
द्यामुपसद्योपगम्यतन्निष्ठतयानिश्चयेनशीलयंति॥ तेषामविद्यादेःसंसारबीजस्यविशरणाद्धिंसनाद्विनाशनादित्यनेनार्थयोगेनविद्योपनिषदि
त्युच्यते। तथाचवक्ष्यति निचाय्यतंमृत्युमुखात्प्रमुच्यतइति। पूर्वोक्तविशेषणान्मुमुक्षून्वापरंब्रह्मगमयतीतिब्रह्मगमयितृत्वेनयोगाद्ब्रह्मविद्योपनि
षत्। तथाचवक्ष्यतिब्रह्मप्राप्तोविरजोभूद्विमृत्युरिति। लोकादिर्ब्रह्मजज्ञोयोग्निस्तद्विषयायाविद्याद्वितीयेनवरेणप्रार्थ्यमानायाःस्वर्गलोकफलप्राप्तिहे
तुत्वेनगर्भवासजन्मजराद्युपद्रववृंदस्यलोकान्तरेपौनःपुन्येनप्रवृत्तस्यावसादयितृत्वेनशैथिल्यापादनेनधात्वर्थयोगादग्निविद्याप्युपनिषदित्युच्यते॥ त
थाचवक्ष्यतिस्वर्गलोकाअमृतत्वंभजंतइत्यादि। ननुचउपनिषच्छब्देनाध्येतारोग्रंथमप्यभिलपंतिउपनिषदमधीमहेऽध्यापयामइतिचैवंनैषदोषः ॥ ९

माणयति॥ तथाचेति। सदेर्गत्यर्थमादायाह। पूर्वोक्तेति। कर्तृत्वाद्यनर्थमूलाविद्यांनिहत्यपूर्वोक्तविशेषणान्साधनचतुष्टयसपन्नान्सादयतिपरब्रह्मगमयतीतिव्युत्पत्त्याब्रह्मगम
यितृत्वयोगेनयोगात्संबन्धाद्ब्रह्मविद्योपनिषच्छब्देनोच्यतइत्यर्थः उक्तेर्थेव्याख्येयश्रुतिवाक्यंप्रमाणयति। तथाचेति॥ विद्ययाब्रह्मप्राप्तोविगतंरजोयस्मात्सविरजोऽज्ञान
शून्योऽभूदतएवकार्यनिवृत्तिरित्याह विमृत्युरिति॥ मृत्योर्मरणोपलक्षितसंसाराद्विगतइत्यर्थः॥ ननुव्याचिख्यासितग्रन्थप्रतिपाद्यविद्योपनिषच्छब्देनोच्यतइत्ययुक्तंत
थात्वेग्निविद्याप्रकाशनानापत्तेरित्याशंक्यसदेरग्निविद्यायामवसादनविशरणार्थावादाद्योपनिषच्छब्दस्य वृत्तिमाह॥ लोकादिरिति लोकानामादिः प्रथमजोब्रह्मणोजातो
ब्रह्मजःसएवजानातीतिज्ञस्तद्विषयायाअग्निविषयायाः जरादीत्यादिपदेनमरणादिसंग्रहः वृंदस्यसमूहस्यावसादयितृत्वेनधात्वर्थयोगादग्निविद्याप्युपनिषच्छब्देनो
च्यतइत्यन्वयः इतरक्रियातोवैषम्यमाह॥ लोकांतरेति॥ उक्तेर्थेवाक्यशेषंप्रमाणयति॥ तथाचेति॥ स्वर्गलोकायजमानाः अमृतत्वंदेवत्वंभजंतेप्राप्नुवंतीत्यर्थः उपनिषच्छब्दस्यग्रं
थेअध्यापकाध्येतृप्रसिद्धिविरोधंशंकते॥ नन्विति॥ प्रथमचकारएवकारार्थेक्रियान्वयीद्वितीयप्रयोगद्वयसमुच्चयार्थः उपपादितयोगार्थस्यविद्यायामेवसंभवात्सैवतच्छब्देनोच्य

प्रतिज्ञायां हेतुमाह॥ अविद्येति॥ अविद्याकामकर्मेत्येवमादिर्यः संसारस्तस्य कर्तृत्वादेर्हेतुस्तस्य विशरणादेरादिपदेन गत्यवसादयोर्ग्रहणं भवति॥ ननु ग्रंथे प्रयोगः कथ मित्यत आह॥ ग्रंथस्यापीति॥ तादर्थ्येनेति सोर्थः प्रयोजनं यस्य स तदर्थस्तस्य भावस्तादर्थ्यं तज्जनकत्वेनेति यावत् सशब्द उपनिषदिति यस्य स तच्छब्दस्तस्य भावस्त च्छब्दत्वं तस्योपपत्तेः संभवादित्यर्थः तज्जनके तच्छब्दप्रयोगे दृष्टांतमाह॥ आयुरिति॥ आयुःप्रदे घृते आयुःपदवदित्यर्थः॥ उपसंहरति तस्मादिति॥ ग्रन्थे तु भक्त्येति लक्षण योपनिषच्छब्दप्रयोग इत्यर्थः॥ उपनिषच्छब्देन सिद्धमर्थमाह॥ एवमित्यादिना उपनिषन्निर्वचनमुपनिषच्छब्दस्य योगार्थकथनं तेन विशरणावसादनार्थानुगमेन विद्याया विवेकादिविशेषणविशिष्टोधिकार्युक्तो गत्यर्थानुगमेन मुमुक्षुशब्दितत्वंपदलक्ष्यप्रत्यगात्मभूतं परं ब्रह्म विद्याया विशिष्टोऽसाधारणो विषय उक्तोऽस्या विद्यायाः प्रयोजनं चाविद्यानिवृत्तिद्वारा संसारनिरतिशयत्वंतिक्यारोपिताभावस्याधिष्ठानात्मकत्वेन ब्रह्मप्राप्तिलक्षणा निवृत्तिः अथवा ब्रह्मप्राप्तेस्तद्रूपनिरतिशयानंदप्राप्तेर्लक्षणा ज्ञापिकेत्यर्थः संबंधमाह संबंधश्चेति॥ एवंभूतप्रयोजनेन संसारनिवृत्त्यादिप्रयोजनेन संबंध उक्तः ज्ञानादीनामिति शेषः अयं भावः नहि संवर्गाख्ये कः कामादिपरतंत्रस्त द्वदनेकजन्मार्जितसुकृतपरिपाकाल्लब्धसत्त्वस्याधिकारिणः कस्यचित्संभवाद्बंधस्य च मिथ्यात्वेनाविद्याकल्पितत्वात्कर्मभिर्निवृत्त्ययोगादन्वयव्यतिरेकाभ्यां मुक्तिं तत्त्व

अविद्यादिसंसारहेतुविशरणादेः सदिधात्वर्थस्य ग्रंथमात्रेः संभवाद्विद्यायां च संभवाद्ग्रंथस्यापि तादर्थ्येन तच्छब्दत्वोपपत्तेः॥ आयुर्वै घृतमित्यादिवत् तस्माद्विद्यायां मुख्यया वृत्त्योपनिषच्छब्दो वर्त्तते ग्रंथे तु भाक्त इति॥ एवमुपनिषच्छब्दनिर्वचनेनैव विशिष्टोऽधिकारी विद्यायामुक्तो विषयश्च विशि ष्ट उक्तो विद्यायाः परं ब्रह्म प्रत्यगात्मभूतं प्रयोजनं चास्या उपनिषद आत्यंतिकी संसारनिवृत्तिर्ब्रह्मप्राप्तिलक्षणा संबंधश्चैवंभूतप्रयोजनेनोक्तोऽतो य थोक्ताधिकारिविषयसंबंधप्रयोजनाया विद्यायाः करतलन्यस्तामलकवत्प्रकाशकत्वेन विशिष्टाधिकारिविषयप्रयोजनसंबंधा एता वल्ल्यो भवंती त्यतस्ता यथाप्रतिभानं व्याचक्ष्महे॥ तत्राख्यायिका विद्यास्तुत्यर्था ॥

ज्ञानेनैव रजतभ्रांतेर्न्यायेन शास्त्रेण च ज्ञानेनैव बंधनिवृत्तेरत एवाकर्तृब्रह्मात्मैक्यविषयस्यापि संभवः॥ एवं ज्ञानेनाविद्यानिवृत्तेर्जन्यजनकभावः संबंध इत्यायूह नीयमिति॥ अधिकारिविषयप्रयोजनसंबंधत्वेन विद्यायास्तज्जनकवल्लीनामपि तैः संबंधादधिकार्यादिमत्त्वमित्यभिप्रेत्याह॥ अत इति॥ प्रकाशकत्वेन जनकत्वेन विशि ष्टेति विशिष्टान्यधिकारिविषयप्रयोजनानि तैः संबंद्धा एता व्याख्येयत्वेन बुद्धिस्थास्तासां व्याख्येयत्वमुपसंहरति॥ इत्यत इति॥ औद्धत्यं परिहरति यथेति॥ यथाप्रति भानं यथाज्ञानं व्याचक्ष्महे व्याख्यां कुर्महे॥ नन्वन्य इत्यारभ्यैवोपनिषद्व्याख्यानार्हा विद्याजनकत्वात्प्रथमायाश्चाख्यायिकारूपत्वेन विद्या नंगत्वादित्य त आह॥ आख्यायिकेति॥ विद्यायां प्रवृत्तिहेतुस्तुत्युपयोगित्वेन तदधिकारदेहत्वमिति विद्याप्रतिपादकत्वेनाख्यायिकापि व्याख्येयत्वमिति भावः॥ वशकांतौ कांतिरिच्छा व शधातोः शतृप्रत्यये उशन्निति रूपं वृत्तार्थो भूतार्थः यशः कीर्त्तिः रूढितो वा वाजश्रवा इत्यनुवर्त्तते सर्वमेधेन सर्वस्वदक्षिणाकेनर्द्धिजे यजनं कृतवानित्यर्थः॥ तत्फलं विश्वजितः फलं॥ ॥

ॐ सहनाविति शांतिः ३। अर्थांतरप्रसिद्ध्यवद्योतौ हितीयो निपातः अप्राप्तप्रजननशक्तिमप्राप्ताप्रजनने प्रजोत्पादने शक्तिर्येन स तं श्रद्धाविवेशेत्यन्वयः। ननुगुर्वधीनः
स्वार्थेनव्यापरयेदितिन्यायात्कथंस्वेष्टानुकूलाश्रद्धेत्यतआह। पितुरितिकाम्यतइतिकामःहितश्चासौकामश्चहितकामःस्वर्गादिरितियावत्‌तेनप्रयुक्ताजनिताजन
कोद्देशज्ञानाधीनेत्यर्थः प्रविष्टवतीति॥ सश्रद्धावान्जातइतिभावः। दक्षिणास्वित्यादिवाक्यमाकांक्षापूर्वकमपेक्षितंपूरयन्व्याकरोति। कस्मिन्निति। सदस्येभ्यश्चेतिऋ
त्विग्भ्योन्येसदसियज्ञसभायांयेमिलितास्तेभ्यश्चविभागेनेत्येतस्यैतावदित्युपनीयमानासुदीयमानासुदक्षिणास्वितिव्याचष्टे। दक्षिणार्थास्विति विशेष्यंपूरयतिगो
ष्विति ऋत्विगादिभ्योगोषुदीयमानासुतंश्रद्धाविवेशेत्यन्वयः मननप्रकारंप्रश्नपूर्वकमवतारयति कथमित्यादिनाविशेष्यंतेपीतोदकत्वादिविशेषणेनसंयुज्यंतेपी
तमुदकंप्रागेवनोत्तरकालंपानशक्तिरप्यस्तीत्यर्थः एवंदानोत्तरकालेतृणभक्षणेदोहनेचनशक्तिरित्यर्थोद्रष्टव्यः अप्रजननसमर्थाः प्रजननेवत्सप्रसवेसामर्थ्यशू

उशन्कामयमानः हवैवृत्तार्थस्मरणार्थौनिपातौ। वाजमन्नंतद्दानादिनिमित्तंश्रवोयशोयस्यसवाजश्रवाःरूढितोवातस्यापत्यंवाजश्रवसःकिल
विश्वजितासर्वमेधेनेजेतत्फलंकामयमानःसतस्मिन्क्रतौसर्ववेदसंसर्वस्वंधनंददौदत्तवांस्तस्ययजमानस्यहनचिकेतानामपुत्रःकिलआसब
भूवतंहनचिकेतसंकुमारंप्रथमवयसंसंतंअप्राप्तप्रजननशक्तिंबालमेवश्रद्धाःस्तिक्यबुद्धिः पितुर्हितकामप्रयुक्ताआविवेशप्रविष्टवती॥ कस्मि

ॐ सहनाविति शांतिः॥३॥ शन्नोमित्रःशंवरुणःशांति॥३॥ उशनहवैवाजश्रवसःसर्ववेदसंददौ
तस्यहनचिकेतानामपुत्रआसतꣳहकुमारꣳसंतंदक्षिणासुनीयमानासुश्रद्धाविवेश सोमन्यत
पीतोदकाजग्धतृणा। दुग्धदोहानिरिंद्रियाः अनंदानामतेलोकास्तान्सगच्छतिताददत्॥ ॥ ॥

न्कालइत्याह। ऋत्विक्भ्यःसदस्येभ्यश्चदक्षिणासुनीयमानासुविभागेनउपनीयमानासुदक्षिणार्थासुगोषुसआविष्टश्रद्धोनचिकेताअमन्यतआ
लोचितवान्कथमित्युच्यते। पीतोदकाइत्यादिनादक्षिणार्थागावोविशेष्यंतेपीतमुदकंयाभिस्ताःपीतोदकाः जग्धंभक्षितंतृणंयाभिस्ताजग्धतृणाः
दुग्धोदोहःक्षीराख्योयासांतादुग्धदोहाः निरिंद्रियाअप्रजननसमर्थाजीर्णानिष्फलागावइत्यर्थः। यास्ताएवंभूताऋत्विग्भ्योदक्षिणाबुध्याददद
त्प्रयच्छन् अनंदाअनानंदाअसुखानामेत्येतत्‌येतेलोकास्तान्सयजमानोगच्छति॥

न्याः निष्फलाइतिशकृदपिद्रवीभूतेतिनिष्फलाइत्युच्यंतेयःप्रयच्छन्सगच्छतीत्यन्वयः कानित्यपेक्षायामाहतइतितच्छब्दःप्रसिद्धार्थकइत्याह। यइतिप्रसिद्धालो
काइत्यर्थःकीदृक्विधाइत्यपेक्षायामाह। अनंदाइतिननंदाःआनंदयंतीतिनंदाःसुखजनकास्तेनभवंतीत्यनंदाः तदाहअनानंदाअसुखनामानइत्येतदिति॥ मनन
प्रकारमुपसंहरन्नुत्तरवाक्यमुपसंहरति॥ ॥

एवमित्यादिना॥ एवंपूर्वोक्तिगोदक्षिणयाक्रतोरसंपत्तिरसांगतानिमित्तं यस्य फलस्य तथापुत्रेणसतापुन्नाम्नोनरकात्त्रायतइतिव्युत्पत्तेः। सत्पुत्रेणेतियावत्। अपिशब्दोद्रव्यांत रस्वातंत्र्याभावयोःसूचकः आत्मप्रदानेनापिक्रतुसंपत्तिंकृत्वापुत्रेणसतामयापितुरनिष्टंफलेनिवारणीयमित्यन्वयः दीर्घाभावश्छांदसइत्याद। तातेतिदास्यसीतिसनचिकेताः पितरमुवाचेत्यन्वयः। एवंपूर्वोक्तवचसोक्तेनप्रेरितेनद्वितीयंद्वितीयवारंतृतीयंतृतीयवारंपुनःपुनरप्युवाचेत्यर्थः किमित्यतआह। कस्मादिति अपेक्षितंपूरयन्नुत्तरमवतारयति॥ नायमिति॥ एवमुक्तइतिपित्रेतिशेषः। परिदेवयांचकारदीर्घचिंतांकृतवानित्यर्थः। चिंताप्रकारंप्रश्नपूर्वकमवतारयति कथमित्यादिना॥ बहूनांमुख्यवृत्तिमतामितिशेषः मुख्यपायथावसरंज्ञात्वाशुश्रूषणे प्रवृत्तिरूपयेत्यर्थः। शिष्यादीत्यादिपदेनपुत्रभार्यादयोगृह्यंतेमध्यमवृत्तिभाजांशिष्यादीनांमध्यमानांचकारोवृत्तिद्वयसमुच्चये। कालभेदेननचिकेतसिविद्यतइतिद्योतनार्थः मध्यमयैवेति। आज्ञादिवशेनशुश्रूषणे प्रवृत्तिरूपयेत्यर्थः। नाधमयापित्रादिनाकोपितःसन्शुश्रूषणेप्रवृत्तिरूपयापि

तदेवंकृत्वसंपत्तिनिमित्तंपितुरनिष्टंफलंमयापुत्रेणसतानिवारणीयंआत्मप्रदानेनापिक्रतुसंपत्तिंकृत्वेत्येवंमत्वापितरमुपगम्यसहोवाचपितरंहेत तताकस्मैक्रत्विग्विशेषायदक्षिणार्थंमांदास्यसिप्रयच्छसीत्येतदेवमुक्तेनपित्रोपेक्ष्यमाणोपिद्वितीयंतृतीयमप्युवाचकस्मैमांदास्यसिकस्मै मांदास्यसीतिनायंकुमारस्वभावइतिक्रुद्धःसन्पितातंहपुत्रंकिलोवाचमृत्यवेवैवस्वतायत्वात्वांददामिसएवमुक्तःपुत्रएकांतेपरिदेवयांचकार

सहोवाचपितरं। ततकस्मैमांदास्यसीतिद्वितीयंतृतीयंतꣳहोवाचमृत्यवेत्वाददामीति। बहूनामेमिप्रथमोबहूनामेमिमध्यमः। किꣳस्विद्यमस्यकर्त्तव्यंयन्मयाद्यकरिष्यति। अनुपश्ययथापूर्वेप्रतिपश्यतथापरे॥ ७॥ ७॥

कथमित्युच्यते। बहूनांशिष्याणांपुत्राणांवाएमिगच्छामिप्रथमःसन्मुख्ययाशिष्यादिवृत्त्येत्यर्थः। मध्यमानांचबहूनांमध्यमयैववृत्त्यैमिनाधमयाकदाचिद् पितमेवंविशिष्टगुणमपिपुत्रंमांमृत्यवेत्वाददामीत्युक्तवान्पितासकिंस्विद्यमस्यकर्त्तव्यंप्रयोजनंमयाप्रत्तेनकरिष्यतियत्कर्त्तव्यमद्यनूनंप्रयोजनमनपे क्ष्यैवक्रोधवशादुक्तवान्पितातथापितत्पितुर्वचोमृषामाभूदित्येवंमत्वापरिदेवनापूर्वकमाहपितरंशोकाविष्टंकिंमयोक्तमिति। अनुपश्यालोचयनिभाल यानुक्रमेणयथायेनप्रकारेणवृत्ताःपूर्वेऽतिक्रांताःपितृपितामहादयस्तवतान्दृष्ट्वाचतेषांवृत्तमास्थातुमर्हसीतिवर्त्तमानाश्चापरेसाधवोयथावर्त्ततेतांश्चप्र

त्रादिनाकोपितःकदाचिदपिअधमयानैमीतिसंबंधःएवंवि शिष्टगुणंहीनवृत्तिरहितंमुख्यमध्यमवृत्तिभाजांगुणवतःपुत्रस्यमृत्यवेदानमनुचितमित्याह। अपिपुत्र मिति। मयाप्रत्तेनदत्तेनद्वारणकर्त्तव्यमद्ययमस्यकरिष्यति। तत्प्रयोजनंकिंकर्त्तव्यमासीन्नासीदेवविधानाभावात्कथंतर्ह्युक्तवानतआहनूनमितिनूनंनिश्चयोःपेक्षि तंपूरयन्नुत्तरमवतारयति॥ तथापीति॥ तद्वचःपितुर्मृषामाभूदितिएवंपरिदेवनापूर्वकंकिंमयोक्तमितिशोकाविष्टंपितरमाहेत्यन्वयः॥ निभालयेतिदीर्घमालोचनंकुर्वित्यर्थःउ पसर्गव्याचष्टे। अन्विति। क्रमेणपितृपितामहाःक्रमेणवृत्ताःस्वधर्मेसत्यवचनादौस्थिताः। तवपितृपितामहादयोयेनप्रकारेणवृत्ताःतंप्रकारमालोचयेत्यन्वयः॥

तद्वृत्तालोचनेनममकिंस्यादित्यतआह॥ तानिति॥ वृत्तंसत्यवचनादि आस्थातुंप्राप्तुमर्हसियोग्योभवसीत्यर्थः॥ आलोचयेत्यनंतरंतांश्चदृष्ट्वातेषामपिवृत्तंप्राप्तुमर्हसीत्य
नुषंगः।नचतद्वृत्तमसत्यवचनादिसहितमित्याह। नचेति वृत्तंभूतं।ननुभूताभावेपिवर्तमानंभावीवास्यादित्यतआह॥ वर्तमानमितिवाशब्दोनुक्तभविष्यदुपसंग्रहार्थः
प्रत्यक्षादिप्रमाणविरोधात्तेष्वसद्वृत्तंनेतिभावः॥ननुमृषाकरणंचेद्देवत्वादिप्राप्तिहेतुस्तदातत्यागोनुचितइत्याशंक्यतदेवनेत्याह॥ नचेति॥ तत्रहेतुत्वेनवाक्यमवतार
यति। यतइति। सस्यमिवेति। यथासस्यंफलितंरसवियुक्तंनश्यत्येवंमनुष्योपिजीर्णोवृद्धावस्थांप्राप्यम्रियतेदेहंत्यजतीत्यर्थः। नकेवलंजरामरणवानेवकिंतुजनिमा
नपीत्याह। मृत्वाचेति। अवस्थाद्वयसमुच्चयार्थश्चकारः॥ सस्यमिवेति॥ प्रावृट्कालेवर्षधारासिक्तंसस्यंयथाप्रादुर्भवतितथासंचितकर्मोद्भवेमनुष्योपिदेहांतरंप्रा
प्नोतीत्यर्थः।पुनराविर्भवतिम्रियतेचयतोतोनकश्चिन्मृषाकृत्वाऽजरामरोभवतीत्यन्वयः प्रतिपदंव्याख्यायतात्पर्यार्थमाह॥ एवमिति॥ किंप्रयोजनंनकिमपी

नचतेषांमृषाकरणंवृत्तंवर्तमानंवास्तितद्विपरीतमसंतांचवृत्तंमृषाकरणं॥ नचमृषाकृत्वाकश्चिदजरोऽमरोभवति। यतःसस्यमिवमर्त्योमनुष्यः
पच्यतेजीर्णोम्रियतेमृत्वाचततएवसस्यमिवाजायतेआविर्भवतिपुनरेवमनित्येजीवलोकेकिंमृषाकरणेनपालयात्मनःसत्यंप्रेषयमांयमाये
त्यभिप्रायः सएवमुक्तः पिताऽत्मनःसत्यतायैप्रेषयामास। सचयमभवनंगत्वातिस्रोरात्रिरुवासयमेप्रोषितेप्रोष्यागतंयमममात्याभार्याऊचुर्बोध

सस्यमिवमर्त्यःपच्यतेसस्यमिवाजायतेपुनः।वैश्वानरःप्रविशत्यतिथि
र्ब्राह्मणोगृहान् तस्यैतांशांतिंकुर्वंतिहरवैवस्वतोदकं आशाप्रतीक्षे॥

यतोवैश्वानरोग्निरेवसाक्षात्प्रविशत्यतिथिःसन्ब्राह्मणोगृहान्दहन्निवतस्यदाहंशमयंतइवाग्नेरेतांपाद्यासनादिदानलक्षणांशांतिंकुर्वंतिसंतोऽति
थेः।यतोभतोहराऽहरदेवैवस्वतोदकंनचिकेतसेपाद्यार्थंयतश्चाकरणेप्रत्यवायःश्रूयते।आशाप्रतीक्षेअनिर्ज्ञातप्राप्येष्टार्थप्रार्थनाऽशानिर्ज्ञातप्रा
{ प्यार्थप्रतीक्षणंप्रतीक्षातेआशाप्रतीक्षे॥
त्यर्थः।यमायप्रेषयतदन्वात्मनःसत्यंपालयेत्यन्वयःश्रुत्यनुक्तपूर्वभाषणादिकंकथायामपेक्षितमितिपूरयति॥
सएवमुक्तइतिसत्यतायैवचःसत्यत्वायप्रोषितेब्रह्मभवनंगतेसनचिकेताः यमभवनंगत्वातिस्रोरात्रीरुवासेत्यन्वयः प्रोष्यब्रह्मभवनंगत्वातस्मादागतंयमं
बोधयंतऊचुरित्यन्वयः अतिथिःसन्ब्राह्मणःसाक्षादग्निरिवदहन्निवगृहान्प्रविशति। तस्याग्नेर्दाहंशमयंतइवसंतोअतिथेःशांतिंकुर्वंतियतइत्यन्वयः किम
र्थमित्यपेक्षायामाह नचिकेतसइति नन्वतिथेः पूजाकिमिष्टप्राप्तयेअथानिष्टनिवृत्तयेनोभयंमानाभावादित्याशंक्ययस्याग्निहोत्रमित्यादिश्रुतेरकरणेप्रत्यवा
यान्नित्यकर्मवत्करणेऽभ्युदयइतिमत्वाह। यतइतिचकारःशिष्टाचारावगताभ्युदयहेतुत्वसमुच्चयार्थः श्रवणमेवव्याकरोति आशेत्यादिनाअनिर्ज्ञातोऽत्यं
तमज्ञातःप्राप्यःप्राप्तुंयोग्यःकनकाचलादिस्तस्यप्रार्थनाममभूयादितीच्छानितरांप्रत्यक्षादिनाज्ञातःप्राप्योर्थोराज्यादिर्यस्याःसाप्रतीक्षेत्यर्थः॥ ॥ ॥

योगोदेवताध्यानंतज्जंसंगतमित्यर्थः। तन्निमित्तमितिसाप्रियवाक्निमित्तंयस्यतत्तन्निमित्तंफलमित्यनुवर्त्तते। यागजंस्वर्गाद्यारामादिक्रियाजंपितृलोकादिकीदृ
ग्विधस्येत्यल्पमेधसइतिकोनाशयतीत्यपेक्षायामाह। यस्येत्यादिना यस्यगृहेऽभुंजानोब्राह्मणोवसतीत्यन्वयः। तात्पर्यार्थमाह। तस्मादिति। यस्मादनश्नन्नतिथिः
सर्वंनाशयतीतिप्रत्यवायःश्रूयतेय स्माच्चवृद्धाःपाद्यादिभिरतिथिंपूजयंतितस्मादित्यर्थः। सर्वावस्थास्वितिकष्टायामप्यापदीत्यर्थः। अपिशब्दात्स्वस्थावस्थायांकि
मुवक्तव्यमितिभावः। एवमुक्तोभार्याभिरमात्यैश्चेतिशेषःपूजापुरःसरंनचिकेतसमुपसंगम्यसमीपंगत्वामृत्युरुवाचेत्यन्वयः। वचनप्रकारमेवप्रतीकमादायव्या

संगतंसत्संयोगजफलं। सूनृतांचसूनृताप्रियावाक्तन्निमित्तंचइष्टापूर्त्तेइष्टंयागादिजंआपूर्त्तंआरामादिक्रियाजंफलंपुत्रपशूंश्चपुत्रांश्चपशूं
श्चसर्वानेतत्सर्वंयथोक्तंवृंक्ते आवर्जयतिविनाशयतीत्येतत्पुरुषस्याल्पमेधसोऽल्पप्रज्ञस्ययस्यानश्नन्अभुंजानोब्राह्मणोगृहेवसतितस्मा
दनुपेक्षणीयःसर्वावस्थास्वप्यतिथिरित्यर्थः। एवमुक्तोमृत्युरुवाच। नचिकेतसमुपगम्यपूजापुरःसरंतिस्रोरात्रीर्यद्यस्मादवात्सीरुषितवा
नसिगृहेममानश्नन्हेब्रह्मनःतिथिःसन्नमस्योनमस्कारार्हश्च। तस्मान्नमस्तेतुभ्यमस्तुभव तुहेब्रह्मन्स्वस्तिभद्रंमेस्तुतस्माद्भवतोऽन

संगतंसूनृतांचेष्टापूर्तेपुत्रपशूंश्चसर्वान्। एतद्वृंक्तेपुरुषस्याल्पमेधसोयस्यानश्नन्वसतिब्राह्मणोगृहे
तिस्रोरात्रीर्यदवात्सीर्गृहेमेनश्नन्ब्रह्मन्नतिथिर्नमस्यः। नमस्तेस्तुब्रह्मन्स्वस्तिमेस्तुतस्मात्प्रतित्रीन्व
रान्वृणीष्वशांतसंकल्पःसुमनायथास्याद्वीतमन्युर्गौतमोमाभिमृत्यो ॥ ॥ ॥ ॥

शनेनमद्गृहवासनिमित्ताद्दोषात्तस्याप्युपशमेनयद्यपिभवदनुग्रहेणसर्वंममस्वस्तिस्यात्तथापित्वदधिकप्रसादनार्थमनशनेनोषितामेकैकांरा
त्रिंप्रतित्रीन्वरान्वृणीष्वाभिप्रेतार्थविशेषान्प्रार्थयस्वमत्तः। नचिकेतास्त्वाहयदिदित्सुर्वरान्शांतसंकल्पउपशांतःसंकल्पोयस्यमांप्रतियमंप्राप्य
किंनुकरिष्यतिममपुत्रइतिसशांतसंकल्पःसुमनाःप्रसन्नमनाश्चयथास्याद्वीतमन्युर्विगतरोषश्चगौतमोममपितामाभिमांप्रतिहेमृत्यो ॥

चष्टे। तिस्रइति। यस्माद्गृहेऽनशनपूर्वकमुषितवान्नमस्कारयोग्यश्चतस्मादित्यर्थः। तस्मादित्युत्तरवाक्यादिपदोक्ताद्दोषादुपशमनंप्रार्थ्यते स्वस्तीति। अनशनेनानशन
पूर्वकंतस्यास्युपशमेनदोषप्राप्तेरुपशमोनिरासस्तेनद्वारानन्वतिथ्यनुग्रहेणैवसर्वंसंपत्स्यतेकिंवरदानेनेत्याशंक्यपरिहरति॥ यद्यपीत्यादिना॥ प्रसादनंप्रार्थनंउषितां ९
स्थितांअभिप्रेताइच्छाविषयास्तान्दित्सुर्दातुमिच्छुःयमंप्राप्यकिंनुकरिष्यतिमत्पुत्रइतिसंकल्पःशांतोमांप्रतियस्यसशांतसंकल्पइत्यन्वयः मृत्योमांप्रतिशांतसंकल्पःसु
मनावीतमन्युश्चयथास्यान्मत्पितागौतमएतत्प्रयोजनमित्यन्वयः॥ ॥ ॥

प्रेतीभूतोयमादागतोऽनवलोकनीयइतिमत्वोपेक्षांयथानकरोतितथाप्रसादंकुर्वित्याह॥ किंचत्वत्प्रसृष्टमितिमामभिमांप्रतिलब्धस्मृतिरित्येतद्व्याचष्टेसएवेतियत्पितुःप
रितोषणमेतत्त्वद्दत्तानांवराणामाद्यंवरंवृणइत्यन्वयः।प्रथमेनवरेणपितुःसौमनस्यंवृणवतेनचिकेतसेवरप्रदानपरत्वेनउत्तरमवतारयति।मृत्युरिति।पूर्ववैवस्वतग
मनात्त्वत्पितायथास्नेहसमन्वितआसीत्तथैवप्रीतिमान्प्रतीतवान्प्रत्यभिजानन्भवितेत्यन्वयः।यथाबुद्धिस्त्वयिपुरस्तात्पूर्वमासीत्स्नेहसमन्विताभविताप्रीतिसमन्वित
स्त्वत्पितातथैवप्रतीतःप्रतीतवान्सन्निति पाठेयथापूर्वस्नेहसमन्विताबुद्धिस्त्वय्यासीत्तथैवबुद्धिःपितुर्भवितेत्येकोन्वयःद्वितीयस्तुयथापूर्वंप्रीतिसमन्वितस्त्वत्पितात
थैवप्रतीतवान्सन्सएवायंपुत्रइतिप्रत्यभिज्ञावान्संस्त्वत्पिताप्रीतिसमन्वितोभवितेतिप्रतितइत्यस्यप्रतीतिमानितिक्वचित्पाठऔद्दालकिरितितद्धितंस्वार्थेव्याख्यायापत्यार्थे

किंचत्वत्प्रसृष्टंत्वयाविनिर्मुक्तंप्रेषितंगृहंप्रतिमामभिवदेत्प्रतीतोलब्धस्मृतिः।सएवायंपुत्रोममागतइत्येवंप्रत्यभिजानन्नित्यर्थः।एतत्त्रयोजनंत्रया
णांवराणांप्रथममाद्यंवरंवृणेप्रार्थयेयत्पितुःपरितोषणं मृत्युरुवाचयथाबुद्धिस्त्वयिपुरस्तात्पूर्वमासीत्स्नेहसमन्वितापितुस्तवभविताप्रीतिसमन्वि
तस्तवपितातथैवप्रतीतःप्रतीतवान्सन्नौद्दालकिःउद्दालकएवौद्दालकिररुणस्यापत्यमारुणिर्द्व्यामुष्यायणोवामत्प्रसृष्टोमयानुज्ञातःसन्इतरा
अपिरात्रीःसुखंप्रसन्नमनाःशयितासुप्तोवीतमन्युर्विगतमन्युश्चभवितास्यात्त्वांपुत्रंददृशिवान्दृष्टवान्सन्मृत्युमुखान्मद्गोचरात्प्रमुक्तंसंतं। न

त्वत्प्रसृष्टंमाभिवदेत्प्रतीतएतत्त्रयाणांप्रथमंवरंवृणेयथापुरस्ताद्भविताप्रतीतऔद्दालकिरारुणिर्मत्प्रसृष्टः।सुखंरात्रीःशयितावीतम
न्युस्त्वांददृशिवान्मृत्युमुखात्प्रमुक्तं।स्वर्गेलोकेनभयंकिंचनास्तिनतत्रत्वंनजरयाबिभेतिउभेतीर्त्वाऽशनायापिपासेशोकातिगो
मोदतेस्वर्गलोकेसत्वमग्निंस्वर्ग्यमध्येषि।मृत्योप्रब्रूहितंश्रद्दधानायमह्यं।३ नचिकेताउवाचस्वर्गेलोकेरोगादिनिमित्तंभयंकिंचनकिंचिदपिना
स्तिनचतत्रत्वंमृत्योसहसाप्रभवस्यतोजरयायुक्तोइहलोकेइवचत्वत्तोनबिभेतिकुतश्चित्तत्रकिंचोभेऽशनायापिपासेतीर्त्वातिक्रम्यशोकमतीत्यगच्छ
तीतिशोकातिगःसन्मानसेनचदुःखेनवर्जितोमोदतेहृष्यतिस्वर्गलोकेदिव्येएवंगुणविशिष्टस्यस्वर्गलोकस्यप्राप्तिसाधनभूतमग्निंसत्वंमृत्युरध्येषिस्म

व्याचष्टेद्व्यामुष्यायणइति।अमुष्यप्रख्यातस्यापत्यमामुष्यायणउत्पन्नः।पुत्रोस्यामुभयोरितिभाषादिनाद्वयोःसंबंधीद्व्यामुष्यायणोनजारजइत्यर्थः।अनुज्ञातोनुग्रहसंप
न्नः।सुखमनायासंसुप्तास्वापकर्त्तास्यात्प्रमुक्तंसतंत्वांदृष्टवान्वीतमन्युःस्यान्मयायमायप्रेरितोमद्वचनमुल्लंघ्यसमागतइतिबुद्धिरहितःस्यादित्यर्थः।पितुःसौमनस्येदत्तेस्व
र्गसाधनमग्निज्ञानंप्रष्टुंस्वर्गरूपंतावदाहस्वर्गेलोकइतिआदिपदादाधिभौतिकाधिदैविकचौरादिसंग्रहः ननुरोगादिनिमित्तभयाभावेपिमन्निमित्तंस्यादितिअतआह।नचेतिस
हसाप्रभवसिइन्द्रदितिप्रभवसीत्यर्थः।यतएवमतोजरादियुक्तःसन्निहलोकेवत्तत्रकश्चिदपित्वत्तोनबिभेतीत्यन्वयः।उभेतीर्त्वेतिवाक्यमन्वयमुखेनव्याचष्टे।किंचेत्यादिना
अतिक्रम्याप्राप्येत्यर्थःशोकातिगःसन्शोकमतिक्रांतःसन्नशोकशब्दस्यार्थमाह।मानसेनेति।चकाराद्बाह्यनिमित्तदुःखराहित्यमुच्यतेदुःखाभावेसुखस्यसंभावित

क॰ उ॰ ५

भा॰ टी॰

एवंगुणविशिष्टस्येति भयमरणाशनायापिपासाशोकरहितत्वगुणेनविशिष्टस्येत्यर्थः। अवबोधहेतुत्वमाह। हेमृत्योइति। देवतात्वात्त्वज्ञानमस्तीतिभावः ज्ञानफलंकि
मित्यपेक्षायामाह। यतइति। अतइत्यध्याहारः अग्निज्ञानंश्रद्धारहितायतत्फलेच्छाविरहिणेचनवाच्यमित्यतआह। श्रद्दधानायेति श्रद्धयास्वर्गार्थित्वमुपलक्ष्य तदुत्या
ह स्वर्गार्थिनइति। देवत्वप्राप्तौहेतुमाह येनेति चितेनोपासितेनेत्यर्थः। यस्मादमृतत्वसाधनमग्निस्तस्मादेतस्याग्नेर्विज्ञानंवृणेप्रार्थये। प्रब्रवीमीत्यन्वयः उपदिश्यार्थे
यत्वयाप्रार्थितंतत्प्रब्रवीमिमेवचसोनिबोधेत्यन्वयः अस्मच्छब्दस्यवचनेलक्षणेत्याह। वचसइतिवाक्यादेकाग्रमनाः सावधानचितः सन्हितार्थेयस्यस्यइत्याह। स्व
र्गायेतिप्रतिज्ञायाः संबोधनस्यचकिंप्रयोजनमित्यपेक्षायामाह। प्रेतेति समाधानंविषयांतरव्यावृत्तिपूर्वकंचित्तस्यैकविषयत्वापादनंतदर्थमित्यर्थः। प्ररोचनायाः प्र

स्वर्गार्थिनेयेनाग्निनाचितेनस्वर्गलोकाः स्वर्गोलोकोयेषांतेस्वर्गलोकायजमानाअमृतत्वंअमरणतांदेवत्वंभजंतेप्राप्नुवंति तदेतदग्निविज्ञानंद्वितीयेन
वरेणवृणेमृत्योःप्रतिज्ञेयंप्रतेतुभ्यंप्रब्रवीमीति यत्वयाप्रार्थितंततउमेममवचांसिनिबोध बुद्ध्यस्वैकाग्रमनाःसन्त्स्वर्ग्येस्वर्गायहितंस्वर्गसाधनमग्निंहेन
चिकेतःप्रजानन्विज्ञातवानहंसन्नित्यर्थः। प्रेतेति प्रब्रवीमितन्निबोधेतिच शिष्यबुद्धिसमाधानार्थंवचनं। अधुनाग्निंस्तौति अनंतलोकाप्तिंस्वर्गलोकफ
लप्राप्तिसाधनमित्येतत् अथोअपिप्रतिष्ठामाश्रयंजगतोविराट्स्वरूपेणतमेतमग्निंमयोच्यमानंविद्धिजानीहित्वंनिहितंस्थितंगुहायांविदुषांबुद्धौनि॰

स्वर्गलोकाअमृतत्वंभजंतएतद्द्वितीयेनवृणेवरेणप्रतेब्रवीमितदुमेनिबोधस्वर्ग्यमग्निंनचिकेतःप्रजानन्। अनंतलोकाप्तिमथोप्र॰
तिष्ठांविद्धित्वमेतंनिहितंगुहायां। लोकादिमग्निंतमुवाचतस्मै याइष्टकायावतीर्वायथावासचापितत्प्रत्यवदद्यथोक्तमथास्यमृत्युःपुन
रेवाहतुष्टः

विष्टमित्यर्थः इदंश्रुतेर्वचनं लोकादिंलोकानामादिंप्रथमशरीरित्वादग्निंतंप्रकृतंनचिकेतसाप्रार्थितमुवाचोक्तवान्मृत्युस्तस्मैनचिकेतसे
किंयाइष्टकाचेतव्याःस्वरूपेणयावतीर्वासंख्ययायथावाचीयंतेऽग्नौयेनप्रकारेणसर्वमेतदुक्तवानित्यर्थः सचापिनचिकेतास्तन्मृत्युनोक्तंप्रत्यवदत्
यथावत्प्रत्ययेनावदत्प्रत्युच्चारितवान् अथास्यप्रत्युच्चारणेनतुष्टःसन्मृत्युःपुनरेवाहवरत्रयव्यतिरेकेणान्यंवरंदित्सुः। सिहेतुत्वमित्यभिप्रेत्याह अधुनेति
सत्रेधात्मानंव्यकुरुतेतिश्रुतेरग्निवाय्वादित्यरूपेणसमष्टिरूपोविराडेव व्यवस्थितइतितेनविराट्रूपेणाग्निर्जगतःप्रतिष्ठेत्युच्यतेसप्रपंचमग्निज्ञानंचयेनप्रकारेणद्र
ष्टव्यमितिश्रुतिरस्मान्बोधयतीत्याह। इदंश्रुतेर्वचनमितिसवैशरीरीप्रथमः सवैपुरुषउच्यते आदिकर्त्तासभूतानांब्रह्माग्रेसमवर्त्ततेति स्मृतेर्विराजोग्नेरादित्वंप्रकृतत्वंव्या
चष्टे नचिकेतसेति। वक्ष्यमाणमपिश्रुतेर्वचनमित्याह। किंचेति चेतव्या उपधातव्याः स्वरूपेणेतिपूर्वेणान्वितं। यथाशब्दार्थमाह येनेति। तत्तदिष्टकाप्रकाशकतत्तन्मंत्रो॰
च्चारणेनेत्यर्थः। तदग्निज्ञानंयमोक्तावधारणसामर्थ्यंनचिकेतसआह। यथावदिति। यथोक्तमग्निंयमंप्रतिप्रत्युच्चारितवान्प्रतिपादितवानित्यर्थः। अथनचिकेतसः प्र
त्युक्त्यनंतरमस्यनचिकेतसः प्रत्युच्चारणेनतुष्टोमृत्युर्वरत्रयव्यतिरेकेणान्यंवरंदित्सुर्दातुमिच्छुः पुनरेवाहोक्तवानितियोजनावदनमेवप्रश्नपूर्वकमाह ॥ ॥ ॥

वचसो

राम॰ ५

कथमित्यादिना शिष्ययोग्यतां यथोक्तार्थग्रहणपूर्वकधारणाख्यां मद्दत्तं गृहीष्यतीत्यतिलोभबुद्धिः क्षुद्रबुद्धिः सा न विद्यते यस्य सोऽक्षुद्रबुद्धिः चतुर्थमिति पितुः सौमनस्या
ग्निविद्यात्मविद्यापेक्षया चतुर्थमित्यर्थः इहेति व्याचष्टे प्रीतिनिमित्तमिति प्रीतिर्निमित्तं प्रयोजकं यस्य तत्। किं तत्प्रयोजकमित्यपेक्षायामाह। तवैवेति। प्रसिद्ध इति नाचि
केत इति त्वन्नाम्ना प्रसिद्धिं गमिष्यतीत्यर्थः नैतावन्मात्रं वरमन्यदपीति नचिकेतसं प्रलोभयन्नाह। किंचेति। शब्दवत्त्वे हेतुमाह। रत्नवतीमिति रत्नमयीमिति पाठांतरा यो
ग्यतयेदं शब्दस्य सन्निहितमालार्थकत्वमित्याह॥ मालामिति। अनेकरूपां अनेकानि रूपाणि नीलादीनि यस्यां सा तां अत एव विचित्रामित्यर्थः सृजिधातोर्ग्रहणार्थमादाया
ह। यदेति। अकुत्सितां गतिमिति अकुत्सिता गतिः धूमादिनाऽर्चिरादिना च प्राप्य फलता मित्यर्थः। नन्वकृते कर्मणि लाभाभावात्कथं वरप्रदानेन कर्मफलप्राप्तिरित्याशंक्य
तात्पर्यार्थमाह। अन्यदपीत्यादिना कर्मविज्ञानं सृंकाशब्दलक्ष्यं फलतोऽनेकरूपं शास्त्रसिद्धं स्वीकुर्वित्यर्थः। प्रीतिनिमित्ताधिकवरदानानंतरमवशिष्टमग्निज्ञानस्य फलं व दि

कथं तं नचिकेतसं अब्रवीत्प्रीयमाणः शिष्ययोग्यतां पश्यन्प्रीयमाणः प्रीतिमनुभवन् महात्मा अक्षुद्रबुद्धिर्वरं तव चतुर्थमिह प्रीतिनिमित्तमद्येदानीं ददा
मि भूयः पुनः प्रयच्छामि। तवैव नचिकेतसो नाम्नाऽभिधानेन प्रसिद्धो भविता मयोच्यमानोऽयमग्निः। किंच सृंकां शब्दवतीं रत्नमयीं मालां इमामनेक
रूपां विचित्रां गृहाण स्वीकुरु यद्वा सृंकां अकुत्सितां गतिं कर्ममयीं गृहाण अन्यदपि कर्मविज्ञानमनेकफलहेतुत्वात्स्वीकुर्वित्यर्थः। पुनरपि कर्मस्तुतिमे

तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः। तवैव नाम्ना भविताऽयमग्निः सृंकां चेमामनेकरूपां गृहाण त्रिणाचिकेतस्त्रिभिरे
त्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यू ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शांतिमत्यंतमेति॥

वाह। त्रिणाचिकेतस्त्रिः कृत्वो नाचिकेतोऽग्निश्चि
तो येन स त्रिणाचिकेतस्तद्विज्ञानवान्वा तदध्ययनवांस्तदनुष्ठानवान्वा त्रिभिर्मातृपित्राचार्यैरेत्य प्राप्य संधिं संधानं संबंधं मात्राद्यनुशासनं यथावत्प्राप्ये
स्येतत्तद्धि प्रामाण्यकारणं श्रुत्यंतरादवगम्यते यथा मातृमान्पितृमानित्यादेः वेदस्मृतिशिष्टैर्वा प्रत्यक्षानुमानागमैर्वा तेभ्यो हि विशुद्धिः प्रत्यक्षा त्रिकर्म
कृदिज्याध्ययनदानानां कर्त्ता तरति अतिक्रामति जन्ममृत्यू। किंच ब्रह्मजज्ञं ब्रह्मणो हिरण्यगर्भाज्जातो ब्रह्मजः

ध्यन्पुनरपि तत्स्तुतिमाह। पुनरपीति त्रिः कृ
त्वः त्रिवारं नाचिकेतोऽग्निश्चितो येन तद्विज्ञानवता स त्रिणाचिकेत इत्यर्थांतरमभिप्रेत्याह। तद्विज्ञानवान्वेति यथावद्यथाकालमुपनयनपर्यंतं मातृतः वेदाध्ययनपर्यंतं पितृतः
आचार्यतः शिक्षां प्राप्येत्यर्थः। तदनुशासनमनपेक्ष्य कर्मविज्ञानमात्रात्त्रिकर्मकृत्स्यादित्याशंक्याह॥ तद्धीति तदनुशासनं हिशब्दः स्मार्त्तप्रसिद्धिद्योतकः प्रामाण्यकारणं धर्म
ज्ञानस्येति शेषः यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छैलिनोऽब्रवीदिति श्रुत्यंतरान्मात्राद्यनुशासनं प्रामाण्यकारणमवगम्यत इति योजना वेदाश्च स्मृतयश्च शि
ष्टाश्च तैः प्रत्यक्षं चानुमानं चागमश्च तैः संधिमेत्येत्यर्थः। विशुद्धिर्धर्मावगतिः इज्या ज्योतिष्टोमादियागो अध्ययनं वेदस्य दानं बहिर्वेदि दीयमानं॥ यथा त्रिकर्मकृत्तरति तथा
त्रिणाचिकेत इति स्तुतिद्वारा फलं प्रदर्श्य फलांतरमपि सविज्ञानमाह। किंचेति हि यस्माद्धिरण्यगर्भो शास्त्रस्मादसौ सर्वज्ञ इत्यर्थः द्योतनादिगुणवंतमादित्यादिरूपत्वादिति शे
षः

क उ टी

भा टी

ईड्यं प्रतिमासमृषिभिर्देवगंधर्वैश्च स्तूयत इति पुराणे प्रसिद्धं दृष्ट्वा चात्मभावेनेत्यर्थः। विंशत्यधिकानि सप्तशतानीष्टकानां संख्या संवत्सरस्य च प्रातः सायं
कालयोरनुष्ठीयमानान्यग्निहोत्राणि तावत्संख्याकान्येव तैरिष्टकास्थानीयैश्चितोऽग्निरहमित्यात्मभावेन ध्यात्वेति स्वबुद्धिःस्थेन कर्त्तव्या बुद्धिरुपासनात यासाक्षा
त्कृतां शांतिं विराजं फलं तात्पर्यार्थमाह। वैराजमिति ज्ञानमुपासनं च यनं कर्म च शब्द उपसंहरतीति। क्रियानुकर्षणार्थः। त्रयं किमित्यतो व्याचष्टे। यथोक्तमिति। इष्टका
नां स्वरूपं संख्याप्रकारश्च एतत्पूर्वोक्तं। चशब्दः कर्मसमुच्चयार्थः एवं शब्दार्थमाह। आत्मरूपेणेति। अग्निशब्देन तद्विषयकध्यानमुच्यत इत्याह। क्रतुमिति। सं
कल्पं ध्यानमिति यावत्। यो ध्यानं निवर्त्तयति यत्नेन करोति स इत्यन्वयः। पाशशब्दो बंधकत्वगुणयोगादधर्मादीनभिधत्त इत्याह। अधर्मेत्यादिना। कस्मादित्यपे

ब्रह्मजश्चासौ ज्ञश्चेति ब्रह्मजज्ञः सर्वज्ञो ह्यसौ तं देवं द्योतनात् ज्ञानादिगुणवंतमीड्यं स्तुत्यं विदित्वा शास्त्रतो निचाय्य दृष्ट्वा चात्मभावेनेमां स्वबुद्धिप्र
त्यक्षां शांतिं उपरतिं अत्यंतमेति अतिशयेनैति वैराजं पदं ज्ञानकर्मसमुच्चयानुष्ठानेन प्राप्नोतीत्यर्थः। इदानीं अग्निविज्ञानचयनफलमुपसंहरति प्रक
रणं च। त्रिणाचिकेतस्त्रयं यथोक्तं या इष्टका यावतीर्वा यथा वेत्येतद्विदित्वा अवगम्य यश्चैवमात्मरूपेणाग्निं विद्वांश्चिनुते निर्वर्त्तयति नाचिकेतमग्निं क्र
तुं स मृत्युपाशान् अधर्माज्ञानरागद्वेषादिलक्षणान् पुरतोऽग्रतः पूर्वमेव शरीरपातादित्यर्थः। प्रणोद्यापहाय शोकातिगो मानसैर्दुःखैर्वर्जित इत्येतन्मोद

त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतं स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके॥ एष तेऽग्निर्नचि
केतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण एतमग्निं तवैव प्रवक्ष्यंति जनासस्तृतीयं वरं नचिकेतो वृणीष्व॥

ते स्वर्गलोके वैराजे पदे विराडात्म
स्वरूपप्रतिपत्त्या एष ते तुभ्यमग्निर्वरो हे नचिकेतः स्वर्ग्यः स्वर्गसाधनं यमग्निं वरमवृणीथाः प्रार्थितवानसि द्वितीयेन वरेण सोऽग्निर्वरो दत्त इत्युक्तोपसं
हारः। किंचैतमग्निं तवैव नाम्ना प्रवक्ष्यंति जना सो जना इत्येतदेव वरो दत्तो मया चतुर्थस्तुष्टेन तृतीयं वरं नचिकेतो वृणीष्व तस्मिन्ह्यदत्ते ऋणवानहमित्य
भिप्रायः। एतावद्ध्यतिक्रांतेन विधिप्रतिषेधार्थेन मंत्रब्राह्मणेनावगंतव्यं। यद्वरद्वयसूचितं वस्तुनात्मतत्त्वविषययाथात्म्यविज्ञानमतो विधिप्रतिषेधा

त्मायामाह। शरीरेति रागादिरहितो भूत्वापहाय वैराजे पद इति शेषः। किंभूयेत्यपेक्षायामपेक्षितं पूरयति। विराडिति। उक्तमुपसंहरति। एष इति स्वर्ग्यः स्वर्गसाधनमित्यर्थः। द्वि
तीयेन वरेण यमग्निं वृतवानस्येष तेऽग्निर्वरोऽग्निरुक्त इत्यन्वयः। पौनरुक्त्यं परिहरति उक्त इति। इदमप्युक्तोपसंहार इत्याह। किंचेति। ननु प्रार्थनामंतरेण स्वयमेव प्रेरण
मनुचितमित्यत आह। अदत्त इति तृतीयवर इति शेषः पितुः सौमनस्यमारभ्य स्वर्गलोकपर्यंतं यद्वरद्वयसूचितं संसाररूपमेव कर्मकांडप्रतिपाद्यमात्मन्यारोपितं तन्नि
वर्तकं चात्मज्ञानमित्यध्यारोपापवादत्वेन पूर्वोत्तरग्रंथयोः संबंधमाह। एतावद्धीति। यस्माद्वरद्वयसूचितं पितृपुत्रस्नेहादि यद्वस्त्वेतावदेवावगंतव्यमित्यन्वयः हिश
ब्द एवकारार्थः विधिप्रतिषेधार्थेन प्रवृत्तिनिवृत्त्यर्थकेन मंत्रब्राह्मणेनोपनिषद्व्यतिरिक्तेनावगंतव्यं। एवकारव्यावृत्तिमाह नात्मेति॥ ॥ ॥

राम ६

आत्मनत्त्वविषयंयद्याथात्म्यविषयंविज्ञानंएवमारोपंप्रदर्श्य तस्यस्वरूपहेतुफलैरनुवादपूर्वकमपवादमाह। अतइति यतोनिवृत्तिविषयत्वंकर्मकांडस्यातइत्य
र्थः विध्यर्थःप्रवृत्तिः निषेधार्थोनिवृत्तिः तद्विषयस्येत्यनेनप्रमाणोपन्यासः स्वरूपमाह। आत्मनिक्रियेति। आदिशब्देनप्रमातृप्रमेयादिसंग्रहः हेतुमाह। स्वाभावि
कस्येति। अस्यव्याख्याःज्ञानस्येति। तस्यानर्थहेतुत्वंस्फुटयति। संसारबीजस्येति। तस्माद्विपरीतंसंसारभिन्नंब्रह्मात्मैकत्वमेववृत्त्यारूढंविज्ञानंतद्विपरीतंस्फुटय
तिक्रियेति आत्यंतिकनिश्श्रेयसंसवासनाविद्यानिवृत्तिरानंदावाप्तिश्च तदेवप्रयोजनंयस्यतत्तथा। प्रथमवल्लीसमाप्तिपर्यंताख्यायिकायाअवांतरतात्पर्यमाह। तमे
तमिति। तंश्रुत्यादिप्रसिद्धमेतंविद्वदनुभवप्रसिद्धं। आत्मज्ञानमंतरेणद्वितीयवरंप्राप्याप्यकृतार्थत्वादित्याख्यायिकयाप्रपंचयतीत्यन्वयः कामादिप्रलोभमाख्यायिका
याःविशेषमाह। यतइति। पूर्वस्मात्पूर्वकांडोदितात्कर्मगोचरः कर्मसाध्याः तस्मादतएवानित्यत्वसातिशयत्वदोषेणदुष्टत्वात्तस्माद्विरक्तस्येतितस्मादित्यर्थे। तन्निंदा

आत्मनिक्रियाकारकफलाद्यध्यारोपणलक्षणस्यस्वाभाविकस्याज्ञानस्यसंसारबीजस्यनिवृत्त्यर्थंतद्विपरीतब्रह्मात्मैकत्वविज्ञानंक्रियाकारक
फलाध्यारोपलक्षणशून्यमात्यंतिकनिःश्रेयसप्रयोजनंवक्तव्यमित्युत्तरोग्रंथआरभ्यते। तमेतमर्थंद्वितीयवरप्राप्त्याप्यकृतार्थत्वंतृतीयवरगोच
रमात्मज्ञानमंतरेणेत्याख्यायिकयाप्रपंचयति। यतः पूर्वस्मात्कर्मगोचरात्साध्यसाधनलक्षणादनित्याद्विरक्तस्यात्मज्ञानेऽधिकारइतितन्निंदार्थं

येयंप्रेतेविचिकित्सामनुष्येऽस्तीत्येकेनायमस्तीतिचैके। एतद्विद्यामनुशिष्टस्त्वयाहंवराणामेषवरस्तृतीयः॥

पुत्राद्युपन्यासेनप्रलोभनंक्रियते। नचिकेताउवाच। तृतीयवरंनचिकेतोवृणीष्वेत्युक्तःसन्। येयंविचिकित्सासंशयःप्रेतेमृतेमनुष्येऽस्तीत्येकेऽस्तिशरीरें
द्रियमनोबुद्धिव्यतिरिक्तोदेहांतरसंबंध्यात्मेत्येके। नायमस्तीतिचैकेनायमेवंविधोऽस्तीतिचैके। अतश्चास्माकंनप्रत्यक्षेणनापिवाऽनुमानेननि
र्णयविज्ञानं। एतद्विज्ञानाधीनोहिपरःपुरुषार्थइत्यतएतद्विद्यांविजानीयामहमनुशिष्टोज्ञापितस्त्वयावराणामेषवरस्तृतीयोऽवशिष्टः॥ ॥ ॥

र्थंकर्मनिंदार्थेनिंदाचनिवृत्तावुपयुज्यतेआदिशब्दःपौत्रादिपरिग्रहार्थः। प्रलोभनंरागानुकूलोव्यापारः अपेक्षितंसमर्पयन्नुत्तरमवतारयति। नचिकेताइति। उक्तःस
न्नुवाचेत्यन्वयः। यासर्वसाधारणाइयंप्रत्यक्षसिद्धामनुष्यग्रहणंप्राणिमात्रोपलक्षणार्थं। शरीरेपतितेआत्मास्तिवानवेतिसंशयोयःप्रसिद्धस्तद्विषयात्मास्तित्वंविद्या
मित्यन्वयः। संशयस्यवादिविप्रतिपत्तिहेतुत्वात्तामाह। अस्तीति। शरीरव्यतिरेकोनेत्येकाविप्रतिपत्तिः। इंद्रियव्यतिरिक्तोनेत्यपरामनोव्यतिरिक्तोनेत्यन्याबुद्धिव्य
तिरिक्तोनेत्यधिका। कर्ताभोक्तावानवेतिविप्रतिपत्तिमूलकोशनायाद्यतीतब्रह्माभेदविषयःसंशयोन्यत्रधर्मादित्यत्रद्रष्टव्यः। वादिविप्रतिपत्तिमूलकःसंशयश्चेत्त
द्धिप्रत्यक्षाद्विनास्वस्यैवनिर्णयसंभवात्तन्निर्णयार्थंप्रश्नोनर्थकइत्यतआह। अतश्चेति। स्थाणौनिर्णीते। पुरुषोनवेतिसंदेहादर्शनाद्देहादिव्यतिरिक्तात्मास्तित्वेचसं
शयदर्शनान्नप्रत्यक्षेणतन्निर्णयः। परलोकसंबंध्यात्मव्याप्यलिंगाभावान्नानुमानेननिश्चयइत्यर्थः। ननुतद्विज्ञानंनिष्फलमित्याशंक्याह। एतद्विज्ञानेति। ॥ ॥

यस्मात्तदधीनपरमपुरुषार्थो तइत्यर्थः। एतदात्मास्तित्वं नतुपितुः सौमनस्यमप्यग्न्यात्मविद्यापेक्षयातृतीयं तत्कथमेषवरस्तृतीय इत्याशंक्यपाठक्रमापेक्षयाः वरिशिष्टकस्तृतीयशब्द इत्याह। वरिशिष्ट इति। नन्वात्मास्तित्वे पृष्टे तदुक्तव्यं तत्कथमन्यदुच्यत इत्याशंक्याशयमाह किमयमिति। एकांततोनियमेनार्थित्वेन विवेकादिकं संगृहीतं विवेकादिशालिन एवज्ञानयोग्यतेति परीक्षणार्थमुत्तरोग्रंथ इत्यर्थः अपिशब्दं भिन्नक्रमेण योजयति। देवैरपीति। देवा अप्येतद्विषयकसंशयवंत इत्यर्थः नन्वमतिहतज्ञाना देवा इतिप्रसिद्धेः कथं संशयस्तत्राह। पुरेति। सृष्टिकालेऽपि शब्दादन्येषांसंशयः सुप्रसिद्ध इति गम्यते तैः श्रुतमपि दुर्ज्ञेयमित्याह। नहीति। तत्रहेतुमाह। यत इति। ननु नाणुपरिमाणस्तत्कथमणुरात्मा तत्आह। सूक्ष्म इति दुर्विज्ञेय इत्यर्थः पूर्वं सुविज्ञेयं इति वस्तुशब्देन निर्देश इहात्मशब्देनेति पुल्लिंगनिर्देशः। अतइत्या

किमयमेकांततो निःश्रेयससाधनात्मज्ञानार्हो नवेत्येतत्परीक्षणार्थमाह। देवैरप्यत्रैतस्मिन्वस्तुनि विचिकित्सितं संशयितं पुरापूर्वं नहिसुज्ञेयं सुष्ठुज्ञेयं श्रुतमपि प्राकृतैर्जनैर्यतोऽणुः सूक्ष्म एष आत्माख्योधर्मः। अतोन्यमसंदिग्धफलं वरं नचिकेतो वृणीष्व मामां मोपरोत्सीः उपरोधं माकार्षीरधमर्णमिवोत्तमर्णः अतिसृजविमुंचैनं वरं मा मां प्रति। एवमुक्तो नचिकेता आह। देवैरत्रापि एतस्मिन्वस्तुनि विचिकित्सितं किलेति भवत एव श्रुतं त्वं च मृत्यो यत् यस्मान्नसुज्ञेयमात्मतत्त्वमात्थ। कथयस्यतः पंडितैरुपदेशनीयत्वादुक्ता चास्य धर्मस्य त्वादृक्तत्तुल्यो ऽन्यः पंडितश्च न लभ्यो। त्विषमा

देवैरत्रापि विचिकित्सितं पुरानहिसुविज्ञेयमणुरेषधर्मः। अन्यं वरं नचिकेतो वृणीष्व मामोपरोत्सीरतिमासृजैनं। देवैरत्रापि विचिकित्सितं किलत्वं च मृत्यो यन्नसुविज्ञेयमात्थ। वक्ता चास्य त्वादृगन्योन लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित्। शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान्

णोप्ययं तु वरो निःश्रेयसप्राप्तिहेतुरतो नान्यो वरस्तुल्यः सदृशोस्त्येतस्य कश्चिदप्यनित्यफलत्वादन्यस्य सर्वस्यैवेत्यभिप्रायः। एवमुक्तोपि पुनः प्रलोभयन्नुवाच मृत्युः। शतायुषः शतं वर्षाण्यायूंषि येषां तान् शतायुषः पुत्रपौत्रान्वृणीष्व। किंच गवादिलक्षणान्बहून्पशून्हस्तिहिरण्यं हस्ती चहिरण्यं च हस्तिहिरण्यं अश्वांश्च किंच भूमेः पृथिव्याः महद्विस्तीर्णमायतनमाश्रयं मंडलं साम्राज्यं वृणीष्व किंच सर्वमप्येतदनर्थकं स्वयं चेदल्पायुरित्यत आ

त्मज्ञानादित्यर्थः। असंदिग्धफलं पशुपुत्रादि उपरोधं निर्बंधं। तत्र दृष्टांतमाह। अधमर्णमिवेति। उत्तमर्णो धनदाता अधमर्णः प्रतिगृहीता उपदेशनीयत्वादित्यनंतरं त्वमुपदिशेति शेषोद्रष्टव्यः। ननु पंडितैरुपदेशनीयत्वेऽन्ये पंडिताः संतितत्रयाहीत्यत आह। वक्तेति धर्मस्यात्माख्यस्य नलभ्य इति कथमन्विष्यतां तत्राह। अन्विष्यमाणोपीति यद्यपि लोकेयमादन्ये ब्रह्मविदः संतितथापि यमस्य सन्निहितत्वादन्यत्रगमनमाशंक्यैवमुक्तं। एतस्य कश्चिदपि तुल्यो वरो नेत्यन्वयः। तात्पर्यार्थमाह। अनित्येति। शिष्यायसम्यक् शोधिताय विद्यादेयेत्यभिप्रायेण यमस्य पुनरुक्तिरित्याह॥ एवमित्यादिना॥ बहूनिति हस्त्यादिष्वप्यन्वेति। हस्ती चेति जात्येकवचनं हिरण्यमित्यपर्यायतनशब्दो जनपदरक्षणे लक्षणयावर्त्तत इत्याह॥ मंडलेति॥ चत्वारिंशद्योजनमिते देशे सम्राजः कर्म साम्राज्यं जनपदरक्षणमित्यर्थः॥ ॥ ॥ ॥



दि॰ ॥ आँ

धारणकर्मदर्शयति। शरीरमिति। इंद्रियपाटवादिशून्यजीवनस्याप्रयोजनत्वादाह। समग्रेति। समग्राः संपूर्णाः अविकला इति यावत्। जीवितुं यावदिच्छसि। तावज्जीवस्येत्यन्वय सदृशमित्यधिकोपलक्षणार्थं। प्रथमोपिशब्दः पुत्रादिसमुच्चयार्थः द्वितीयो वरसमुच्चयार्थः। अथपुत्रधनादीनामेकैकपरत्वेनोपन्यस्य समुच्चितमिदानीमुपन्यस्यति। किंच वित्तंप्रभूतमिति। प्रभूतमधिकंहिरण्यंरत्नचादिर्यस्यतत्तथा चशब्दार्थमाह। सहेति क्रियापदानुषंगमाह। वृणीष्वेति। भवनक्रियायाः कर्त्तारमध्याहरति राजेति। असभुवी तिधातोर्लोट्मध्यमैकवचनांतस्य एधीति दिव्यानां दिविभवा दिव्याः रंभोर्वशीकल्पवृक्षकामधेन्वादयः। तेषांमानुषाणां मनुष्यसंबंधिनोमानुषाः स्रक्चंदनवनितादयः ते षांचकामार्हं कामयोग्यमित्यर्थः। नन्वकृतकर्मणः पुंसदृष्टप्रदानेतवसामर्थ्यंकुतइत्याशंक्याह। सत्यसंकल्पइतिहि यस्मादहंदेवोप्रतिहतज्ञानैश्वर्यतेजोबलवान् तस्मात्स

स्वयंचत्वंजीवधारयशरीरंसमग्रेंद्रियकल्पापंशरदोवर्षाणि यावदीच्छसिजीवितुं। एततुल्यमेतेनयथोपदिष्टेनसदृशमन्यदपियदिमन्यसेवरंतमपिवृ णीष्वकिंचवित्तंप्रभूतंहिरण्यरत्नादि चिरजीविकांचसहवित्तेनवृणीष्वेत्येतत् किंबहुनामहत्यांभूमौराजानचिकेतस्त्वमेधिभव किंचान्यत्कामानांदिव्या नांमानुषाणांचत्वात्वांकामभाजंकामभागिनंकामार्हंकरोमि। सत्यसंकल्पोह्यहंदेवोयेयेकामाः प्रार्थनीयाः दुर्लभाश्चमर्त्यलोकेसर्वांस्तान्कामान्छंद तः छंदेनप्रार्थयस्व किंचेमादिव्याअप्सरसोरमयंतिपुरुषानितिरामाः सहरथैर्वर्त्तंत इतिसरथाः सतूर्याः सवादित्रास्ताश्चनहिलंभनीयाः प्रापणीयाईदृ

भूमेर्महदायतनंवृणीष्वस्वयंचजीवशरदोयावदिच्छसि एततुल्यंयदिमन्यसेवरंवृणीष्ववित्तंचिरजीविकांच। महाभूमौनचिकेतस्त्वमेधिका मानांत्वाकामभाजंकरोमि। येयेकामादुर्लभामर्त्यलोकेसर्वान्कामांश्छंदतःप्रार्थयस्वइमारामाःसरथाःसतूर्यानहीदृशालंभनीयामनुष्यैः। आभिर्मत्प्रत्ता भिःपरिचारयस्वनचिकेतोमरणंमानुप्राक्षीः श्वोभावामर्त्यस्ययदंतकैतत्सर्वेंद्रियाणांजरयंतितेजः।

शाएवंविधामनुष्यैर्मर्त्यैरस्मदादिप्रसादमंतरेण आभिर्मत्प्रत्ताभिर्मयादत्ताभिःपरिचारिणीभिःपरिचारयस्वात्मानंपादप्रक्षालनादिशुश्रूषांकारयात्मनइत्यर्थः। नचिकेतोमरणंमरणसंबद्धंप्रश्नंप्रेतेऽस्तिनास्ती तिकाकदंतपरीक्षारूपंमानुप्राक्षीः मैवंप्रष्टुमर्हसि। एवंमृत्युनाप्रलोभ्यमानोपिनचिकेतामहाहृदवदक्षोभ्यआह। श्वोभावाश्वोभविष्यंतिनभविष्यंतिवेतिसंदिह्य मानएवएषांभावोभवनंत्वयोप

त्यसंकल्पःतस्मात्सामर्थ्यंयमस्येत्यर्थः। कामाइत्यस्यव्याख्याप्रार्थनीयाइति। दिविभवाः पुरुषाननुकूलानभोग्याइत्याशंक्याह। रमयंतीति। ननुपुरुषरमयितृत्वंभूलोक स्थानामपीत्याशंक्यभौमस्त्रीवैलक्षण्यमाह। सहेत्यादिना। तूर्यंवाद्यविशेषः वादित्रंहस्तवाद्यं। ननुदेवप्रसादादीदृश्याअपिप्रापणीयाइत्यतआह अस्मदादीति आभिःपूर्वोक्ताभिः आत्मानंपरिचारयस्वेत्यन्वयः। तात्पर्यार्थमाह। पादेति। मरणशब्दस्यतत्संबंधिनिप्रश्नेलक्षणामभिप्रेत्याह। मरणसंबद्धमिति। काकदंतपरीक्षारूपंप्रश्नंमानुप्राक्षीः मा का र्षीरित्यर्थः माङुपयोगस्यार्थमाह। मैवमिति॥ सर्वतोविरक्तस्यशमादिमतोज्ञानाधिकार इत्याख्यायिकयासूचयन्नुत्तरमवतारयति। मृत्युनेति। एवंपुत्रादिनाप्रकारेण त्वयापभेनोपन्यस्तानामुदाहृतानांयेषांभवनंसंदिह्यमानमेवतदित्यन्वयः। अपिचनतेपुरुषोपकारिणइतिनिंदायामतिशयमाह॥ ॥ ॥ ॥

क० उ० ४

किंचेत्यादिना। अपक्षयं नाशं कुर्वंति। कइत्यपेक्षायामाह। अप्सरः प्रभृतय इति हिशब्देन प्रत्यक्षानुमानाभ्यां विषयाणां तेजःक्षपयितृत्वं प्रसिद्धमेव द्योत्यते। अथ वा हि यस्मादप्सरः प्रभृतयः क्षपयंति तस्मादेते अनर्थायैवेत्युत्तरेणान्वयः। तत्र पूर्वोक्तं तेजःक्षपयितृत्वमुपलक्षणीकृत्य हेतुमाह धर्मेति। धर्म इष्टापूर्तादिः वीर्यं सामर्थ्यं प्रज्ञा शास्त्रार्थावगाहनशक्तिः तेजः प्रागल्भ्यं त्वग्गता वा दीप्तिः यशः कीर्तिः ननु तत्त्वयोक्तं सत्यं तथापि चिरजीवने विषयोपभोगः पुरुषार्थः इत्याशंक्य तत्रापि दोषं शृण्वित्याह। यां चापीति। चकारापिकारौ विषयदोषसमुच्चयार्थौ दित्ससि दातुमिच्छसि शृणु इति स्थापि शब्दापेक्षितं पूरयित्वा क्रियापदमध्याहरति। शृण्वेति। सर्वशब्दप्रयोगाद्धिरण्यगर्भायुर्गृह्यते। सर्वायुषां तत्रांतर्भावात् एवकारद्योतितमर्थमुक्तं किमुतेति कैमुतिकन्यायमाह। किमुतेति। जीविका यत एवं जाता अतस्तदधीनविषयभोगस्तु तुच्छ इत्याह। अत इति। दृढवैराग्यार्थं पूर्वोक्तं सर्वं निंदनीयमित्याह किंचेति। प्रभूतेनाधिकेन तर्पणीयः प्रीणनीयः। ननु वित्तं चेत्स्यादिति कथं भवत्येवमिति चेन्नेत्याह। नहीति हिशब्देन तृप्तिकरत्वाभावो लोके प्र

किंच मर्त्यस्य मनुष्यस्यांतक हे मृत्यो यदेतत्सर्वेंद्रियाणां तेजस्तज्जरयंत्यपक्षयंत्यप्सरःप्रभृतयो हि भोगा अनर्थायैवैते धर्मवीर्यप्रज्ञातेजोयशः प्रभृतीनां क्षपयितृत्वाद्यां चापि दीर्घजीविकां त्वं दित्ससि तत्रापि शृणु। यत्सर्वं ब्रह्मणोपि जीवितमायुरल्पमेव किमुतास्मदादिदीर्घजीविका अतस्तवैव तिष्ठंतु वाहा रथादयस्तथा नृत्यगीते च। किंच न प्रभूतेन वित्तेन तर्पणीयो मनुष्यो न हि लोके वित्तलाभः कस्यचित्तृप्तिकरो दृष्टो यदि नामास्माकं वित्ततृष्णा स्याल्लप्स्यामहे प्राप्स्यामह इत्येतद्वित्तमद्राक्ष्म दृष्टवंतो वयं चेत्त्वा त्वां जीवितमपि तथैव जीविष्यामो यावद्याम्ये पदे त्वमीशिष्यसीशिष्य

अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते। न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वां जीविष्यामो यावदीशिष्यसि त्वं {वरस्तु मे वरणीयः स एव

से प्रभुः स्याः कथं हि मर्त्यस्त्वया समेत्याल्पधनायुर्भवेत्। वरस्तु मे वरणीयः स एव यदात्मविज्ञानं यतस्त्वाजीर्यतां वयोहानिमप्राप्नुवताममृतानां सकाशमुपेत्य उपगम्यात्मन उत्कृष्टं प्रयोजनांतरं प्राप्तव्यं तेभ्यः प्रजानन्नुपलभमानः स्वयं तु जीर्यन्मर्त्यः जरामरणवान् क्वधःस्थः कुः पृथिवी अधश्चासावंतरिक्षादिलोकापेक्षया तस्यां तिष्ठतीति क्वधःस्थः सन् कथमेवमविवेकिभिः प्रार्थनीयं पुत्रवित्तहिरण्याद्यस्थिरं वृणीते।

सिद्ध इति द्योत्यते॥ अर्थानामर्जने दुःखमिति न्यायात् किंचातृप्तिकरे वित्ते तृष्णैव नास्ति अथापि नामास्तु तथापि वरं विनैव लप्स्यामह इत्याह। यदि नामेति। त्वां वयं दृष्टवंतश्चेद्धि तं लप्स्यामहे प्राप्स्यामह इत्यन्वयः वित्तन्यायमन्यत्राप्यतिदिशति जीवितमपीति। याम्ये यमस्य स्थानं याम्यं तस्मिन् स्थित्वेति शेषः ईशिष्यसीति परस्मैपदं छांदसमित्याह ईशिष्यसे इति प्रभुरिति पुण्यपापवर्तां नियामकः स्याः यावत्कालं प्रभुः स्यास्तावत्कालं त्वद्दर्शनेन जीविष्याम इत्यन्वयः। त्वद्दर्शनेनैव सर्वं लप्स्यामहे किमुत त्वया समेत्य त्वत्समीपं प्राप्य संभाषणादिकं कृत्वेति कैमुतिकन्यायं मनसि निधायाह। कथं हीति हिशब्देन देवतासमागमादिना अभीप्सितप्राप्तिः श्रुतिस्मृतिलोकसिद्धेत्युच्यते अल्प इति। धनायुषोर्विशेषणं। किं तवेप्सितं तदाह। वर इति। किं तदाह किंच। उत्कृष्टपुरुषार्थलाभे संभवत्यधमं कामयमानो मूर्खएव स्यादि

यदिति

भा० टी०

४

सकाशं निकटं तेभ्यो वित्तादिभ्यः देवेभ्यो वा प्रयोजनांतरं प्राप्तव्यमित्यन्वयः। ननु सर्वे किमिति प्रार्थयंते वित्तादिदोषं पश्यत इत्याशंक्याविवेकित्वात्तेषां विवेकिनो मम न प्रार्थनेत्याह। प्रजानन्निति। तेभ्यः प्राप्तव्यं प्रयोजनं प्रजानन्नित्यन्वयः। एवमविवेकिव वृणीत इत्यन्वयः। प्रजानन् प्रयोजनं उपलभमानः क्व तदास्थ इत्यन्वयं मनसि निधाय पाठांतरं व्याचष्टे। अस्मिन्पक्ष इति नन्वधिकतरपुरुषार्थानवगमे तेषु पुत्रादिष्वास्था स्यादित्याशंक्यापेक्षितं पूरयति। तत इति। दुष्प्रापमपीतरजनैरिति शेषः। दुष्प्रापमप्यधिकतरं पुरुषार्थं प्रापिपयिषुः क्व तदास्थो भवेदित्यन्वयः तात्पर्यार्थमाह। न कश्चिदिति। तत्र हेतुमाह। सर्व इति बुभूषति भवितुमिच्छति इयता प्रबंधेनोक्तस्य प्रयोजनमाह। तस्मादिति। यस्मादहं विवेकादिमान्तस्मादित्यर्थः। वर्णाः गीतिः। क्रीडा रतिः प्रमोदः तज्जं सुखं निरूपयन् यथावदुत्पत्तिस्थितिनाशैर्विचारयन्नित्यन्वयः। अतिदीर्घे बहुसंवत्सरपरिमिते जीविते जीवने प्राणधारणे यतो जीविते व्याशापगताः ततो मम प्रलोभनं विहाय प्रार्थितं वरं प्रदेहीत्याह। अत इति। परलोकविषये अस्ति नास्तीत्येवं प्रकृ

क्व तदास्थ इति वा पाठांतरमस्मिन्पक्षे चाक्षरयोजना तेषु पुत्रादिष्वास्था आस्थितिस्तात्पर्येण वर्तनं यस्य स तदास्थः जरामरणधर्मवान् ततोऽधिकतरं पुरुषार्थं दुःप्रापमपि प्रापिपयिषुः क्व तदास्थो भवेन्न कश्चित्तदसारज्ञस्तदर्थी स्यादित्यर्थः। सर्वो ह्युपर्युपर्येव बुभूषति लोकस्तस्मान्न पुत्रवित्तादिलाभैः प्रलोभ्योऽहं किंचाप्सरःप्रमुखान्वर्णरतिप्रमोदाननवस्थितरूपतयाभिध्यायन्निरूपयन्यथावदतिदीर्घे जीविते को विवेकी रमेत अतो विहाय नित्यैः कामैः प्रलोभनं यन्मया प्रार्थितं तत यस्मिन्प्रेते इदं विचिकित्सितं विचिकित्सनं अस्ति नास्तीत्येवं प्रकारं हे मृत्यो सांपराये परलोकविषये महति महत्प्रयोजननिमित्ते आत्मनो निर्णय

अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन्। अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत। यस्मिन्निदं विचिकित्संति मृत्यो यत्सांपराये महति ब्रूहि नस्तत्। योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते॥ इति कठवल्ल्यां प्रथमवल्लिः॥१॥ ॥ ॥

विज्ञानं यत्तद्ब्रूहि कथय नोऽस्मभ्यं किं बहुना योऽयं प्रकृत आत्मविषयो वरो गूढं गूहनं दुर्विवेचनं प्राप्तोऽनुप्रविष्टस्तस्माद्वरादन्यमविवेकिभिः प्रार्थनीयमनित्यविषयं वरं नचिकेता न वृणीते मनसापीति श्रुतेर्वचनमिति। इति कठवल्ल्यां प्रथमा वल्ली समाप्ता॥ ॥ परीक्ष्य शिष्यं विद्यायोग्यतां चावगम्याह। अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः। तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते॥१॥ अन्यत्पृथगेव श्रेयो निःश्रेयसं तथान्यदुत अपि एव प्रेयः प्रियतरमपि ते श्रेयः प्रेयसी उभे नानार्थे भिन्नप्रयोजने सती पुरुषमधिकृतं वर्णाश्रमादिविशिष्टं ॥१

यं यस्मिन्विचिकित्सनं विचिकित्सेति तस्यात्मनो निर्णयविज्ञानं यन्महत्प्रयोजननिमित्ते मोक्षार्थे तद्ब्रूहीत्यन्वयः नचिकेतसं विषयीकृत्यान्यस्याप्यधिकारनिर्णयार्थं संवादरहितं श्रुतेर्वचनमित्याह। किं बहुनेति॥ इति कठोपनिषद्भाष्यविवरणे प्रथमा वल्ली समाप्ता॥ ॥अभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रदर्शनेन च केवलविद्याप्रार्थिताशिष्यं प्रशंसतीत्याह। परीक्ष्येति। अवगम्येति स्मिन्निति शेषः पृथगेव प्रेयसः सकाशादित्यर्थः निःश्रेयसं मोक्षस्तत्साधनत्वात्ज्ञानमत्र निःश्रेयसं। तथेति। यथा श्रेयः पृथक्तथेत्यर्थः प्रियतरमप्यभ्युदयसाधनं ज्योतिष्टोमाद्यन्यदित्यन्वयः भिन्नप्रयोजने ययोस्ते भिन्नप्रयोजने अधिकृतमित्यस्य विशेषणं वर्णाश्रमा

ईशादिषडुपनिषद्भाष्योपरिपट्टः॥

वर्णविशिष्टस्याधिकारे ब्राह्मणो बृहस्पतिसवेन यजेतेत्यादिशास्त्रं प्रमाणं आश्रमविशिष्टस्याधिकारे गृहस्थः सदृशीं भार्यामुपेयादित्यादि वयोविशिष्टस्याधिकारे जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यादि अवस्थाविशिष्टस्याधिकारे विविदिषितव्याधेरपां प्रवेशो वेत्यादि प्रमाणं षिञ् बंधन इति धात्वर्थमादाय व्याचष्टे सिनीत इति। ननु विद्याविद्ययोः कथं बंधकत्वमित्यत आह। ताभ्यामिति। सर्वः कर्मणि वर्णाश्रमादिविशिष्टोऽधिकृतो विद्यायां साधनचतुष्टयसंपन्नः ताभ्यां प्रयुज्यते प्रेर्यते। तयोः प्रेरकत्वं वाक्यमित्याशंक्याह। आत्मकर्तव्यतयेति आत्मनि विद्याविद्ययोः कर्तव्यता इतिसाध्यता तया विधितस्तद्विषयज्ञानेनेत्यर्थः। ननु वैधकर्त्तव्यताज्ञानद्वारा विद्याविद्याभ्यां पुरुषः प्रेर्यत इत्ययुक्तं विधेर्विशेषकर्त्तव्यताबोधित्वात्सामान्यतः सिद्धे केन चित्कर्त्तव्यताज्ञाने तत्स्यात्तदेव नास्तीत्याशंक्याह। श्रेयःप्रेयसोरिति। अभ्युदयार्थी प्रेयसि कर्मण्यमृतत्वार्थी श्रेयसि मोक्षसाधने प्रवर्त्तत इति यथासंख्यमन्वयः। एवं फलकामनया सामान्यतस्तत्साधनं कार्यमिति ज्ञानमभूदिति भावः हि शब्दः प्रसिद्धिद्योतकः यद्वा यथोत्तरत्रान्वेति। हि यस्मात्सामान्येन कामनया कर्तव्यताज्ञानं सिद्धमत इत्युपसंहारेणान्वयः। श्रेयसे प्रेयसे च कर्त्तव्ये विद्याविद्ये तयोर्भावः कर्त्तव्यता तयेत्यर्थः।

सिनीतो बध्नीतः ताभ्यामात्मकर्त्तव्यतया प्रयुज्यते सर्वः पुरुषः श्रेयःप्रेयसोर्ह्यभ्युदयामृतत्वार्थी पुरुषः प्रवर्त्तते अतः श्रेयःप्रेयःकर्तव्यतया ताभ्यां बद्ध इत्युच्यते सर्वपुरुषः ते यद्यप्येकैकपुरुषसंबंधिनी विद्याविद्यारूपत्वाद्विरुद्धे इत्यन्यतरापरित्यागेनैकेन पुरुषेण सहानुष्ठातुमशक्यत्वात्तयोर्हि।

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः। तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते॥ ॥

त्वा अविद्यारूपं प्रेयः श्रेय एव केवलमाददानस्योपादानं कुर्वतः साधु शोभनं शिवं भवति। यस्त्वदूरदर्शी विमूढो हीयते वियुज्यते कस्मादर्थात्पुरुषार्थात्पारमार्थिकान्नित्यात्प्रच्यवत इत्यर्थः। कोऽसौ य उ प्रेयो वृणीते उपादत्त इत्येतत् यद्युभे अपि कर्तुं स्वायत्ते पुरुषेण किमर्थं प्रेय एवादत्ते बाहुल्ये

ताभ्यां विद्याविद्याभ्यां ननु कर्मणो जन्मादिहेतुत्वेन बंधकत्वेऽपि विद्यायास्तन्निवर्त्तकत्वात्कथं बंधकत्वमिति चेत्कर्मणो जन्मादिहेतुत्वेनालाभेन च विद्यायाः बंधकत्वमिति भावः। तयोरन्यतरत्यागेनान्यतरपरिग्रहे हेतुमाह। ते यद्यपीति। तथापि विरुद्धे तत्र हेतुः विद्येति। इति यस्मादर्थे यस्माद्विद्याविद्ये विरुद्धे तस्मादित्यन्यतरापरित्यागेनानुष्ठातुमशक्यत्वादित्यन्वयः। नन्वेकेनैकापरेणापरा कर्तुं शक्येत्यत आह। एकेनेति। ननु क्रमेणानुष्ठातुं शक्येत्यत आह। सहेति। हेतुमुपन्यस्याक्षराणि गृहीत्वा व्याचष्टे। तयोरिति निर्धारणे षष्ठी। अविद्यारूपं कर्म प्रेयो हित्वेत्यन्वयः अपेक्षिताध्याहारेण सर्ववाक्यं सावधारणमिति न्यायेनाह। श्रेय एवेति शिवमानंदरूपं विद्योपादातुः श्रेय इत्युक्त्वा तद्विपरीतस्यानर्थप्राप्तिमाह। यस्त्विति तु शब्दो विद्योपादातुर्वैलक्षण्यार्थः। अदूरदर्शीत्यस्य व्याख्या विमूढ इत्यविवेकीत्यर्थः। ननु कर्मकर्तुः फलं स्यादिति शंकते। कस्मादिति। नन्वर्थान्न हीयत इत्युक्तं अत आह। पारमार्थिकादिति। मोक्षादित्यर्थः ननु मोक्षस्वर्गाद्यन्यतम इत्यत आह नित्यादिति विमूढत्वमक्षरव्याख्यानेन दर्शयति। कोऽसाविति। उ एवोपादत्ते अनुतिष्ठतीत्यर्थः। इत्येतदुपादत्त इत्युक्तेर्यावानर्थस्तावान् वृणीत इत्यर्थः। नन्वधिकृतेन पुरुषेणोभे अपि विद्याविद्ये कर्तुमन्वायत्ते यदि तर्हि

किमर्थं पुरुषो बाहुल्येन श्रेय एव न गृह्णातीत्याशंक्य सत्यं हि अपि स्वाधीने तथापि फलतः साधनतो मंदमतीनामशक्ये मिलिते इव श्रेयःश्रेयसी पुरुषमधिकृतं प्राप्नुत इत्या-
ह। यद्युभे इत्यादिना एत इत्याङ्पूर्वकेण गताविति धातो रूपमित्याह। आपुत इति। तस्य व्याख्या। अश्नुत इति तद्व्याचष्टे। प्राप्नुत इति। परस्परसमुच्चयार्थौ चकारौ व्यामिश्रे इ-
तकौ। यतः श्रेयःप्रेयसी स्वरूपतः फलतश्च विवेकाभावाल्लोकः प्रेय एवादत्ते। तौ बुद्धिमान् हंसो यथांभसः सकाशात्क्षीरं विविच्य भुंक्ते तथा प्रेयसः सकाशाद्विविच्य श्रेयो ग्रा-
त्वात्तदेव साधनैः संपादनीयमित्याह। अत इत्यादिना। गुरुलाघवमिति कर्मणोऽनुष्ठाने महानायासः। फलमपि दुःखसंवलितं विद्याप्राप्तावन्वयव्यतिरेकदृष्टानर्थनिवृत्तिरा-
नंदावाप्तिर्यत्नाभाव इति विविनक्ति विवेचयति गुरुलाघवमित्यर्थः। निर्युक्तं दर्शयति। धीर इति। संस्कृतमतिरिति यावत्। गुरुलाघवविचारस्य फलमाह। श्रेय इति हि रेवार्थः
छंदसि प्राद्योऽव्यवहिताश्चेत्याशयेनाह। अभिवृणीत इति। तत्र हेतुमाह। प्रेयस इति। कर्तृपदं साकांक्षमाह। कोसाविति। यत्तदाध्याहारेण प्रेय इति व्याचष्टे। यस्त्विति। तु

सत्यं स्वायत्ते तथापि साधनतः फलतश्च मंदबुद्धीनां दुर्विवेकरूपे सती व्यामिश्रीभूते इव मनुष्यं पुरुषं आइतः अश्नुतः प्राप्नुतः श्रेयश्च प्रेयश्च। अतो हंस इवां-
भसः पयस्तौ श्रेयःप्रेयःपदार्थौ संपरीत्य सम्यक्परिगम्य मनसालोच्य गुरुलाघवं विविनक्ति पृथक्करोति धीरो धीमान्। विविच्य च श्रेयो हि श्रेय एवाभि-
वृणीते प्रेयसोऽभ्यर्हितत्वात्। कोऽसौ धीरः। यस्तु मंदोऽल्पबुद्धिः स सदसत्विवेकासामर्थ्यात् योगक्षेमात् योगक्षेमनिमित्तं शरीराद्युपचयतल्लक्षणनिमित्तमित्ये-

श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मंदो योगक्षेमाद्वृणीते। स त्वं प्रियान्प्रियरूपा-
ंश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः। नैतां सृंकां वित्तमयीमवाप्तो यस्यां मज्जंति बहवो मनुष्याः॥ तत्प्रेयः पशुपुत्रादिलक्षणं वृणीते

स त्वं पुनः पुनर्मया प्रलोभ्यमानोऽपि प्रियान्पुत्रादीन्प्रियरूपांश्चाप्सरःप्रभृतिलक्षणान्कामानभिध्यायंश्चिंतयंस्तेषामनित्यत्वासारत्वादिदोषान् हे नचिके-
तोऽत्यस्राक्षीरतिसृष्टवान्परित्यक्तवानसि। अहो बुद्धिमत्ता तव। नैतामवाप्तवानसि सृंकां सृतिं कुत्सितां मूढजनप्रवृत्तां वित्तमयीं धनप्रायां यस्यां सृतौ मज्जं-
ति सीदंति बहवोऽनेके मूढा मनुष्याः। तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीत इत्युक्तं

शब्दो बुद्धिमद्वैलक्षण्यार्थः। अल्पबुद्धिरल्पासंस्कृ-
ता बुद्धिर्यस्य सः। प्रेय एव वृणीत इत्यत्र हेतुमाह। विवेकेति। योगस्य प्राप्तस्य क्षेमो रक्षणं तन्निमित्तं तदाह। शरीरेत्यादिना। शरीरेत्यादिशब्देनेंद्रियादिपरिग्रहः। उपचयो वृद्धिः त-
ल्लक्षणनिमित्तं तत्स्वरूपनिमित्तं। प्रेयःशब्दार्थमाह। पश्विति। अत्र प्रेयःशब्दः फलपरः। पुत्रादीनां गौणात्मत्वात् प्रियत्वं प्रियरूपान्प्रियं रूप्यते जन्यते यैस्तेऽप्सरःप्रभृ-
तिलक्षणान् तद्दादिस्वरूपान् चिंतयन्नित्यापेक्षितं पूरयति तेषामिति। वृत्तयमोक्तेस्तात्पर्यं दर्शयति। अहो इति। अनेन शिष्यस्तुतिः कृता मूढजनेषु प्रवृत्ता मूढजनप्रवृ-
त्ता। तां धनप्रायां धनप्रचुरामित्यर्थः। सृतौ मार्गे बहुशब्दस्य वित्तेन पर्यवसानमित्याह॥ अनेक इति॥ पौनरुक्त्यमाशंक्य दूरमेते इति वाक्यस्य व्यावर्त्यशंकामाह। तयो-
रिति। विशेषो न दृश्यत इति भावः परिहारमवतारयति यत इति। दूरमित्यस्य व्याख्या॥ दूरेणेत्यादि। अंतरेण भेदेन एते वक्ष्यमाणे परस्परभिन्नत्वे हेतुमाह॥ ॥

क॰ उ॰ १०

विवेकेति। तत्रदृष्टांतः। तमइति। सुबुद्धोपष्टुंदसइत्याह॥ विषूच्याविति॥ भिन्नफलत्वंव्याचष्टे। संसारेति। संसारहेतुरविद्यामोक्षहेतुर्विद्येत्याकांक्षापूर्वकंव्याचष्टे। केतद्
ति॥ याकर्मकांडेप्रसिद्धाप्रेयोविषया। इतिशब्दोवेदांतप्रसिद्ध्यर्थः। परस्परसमुच्चयार्थश्चकारः श्रेयोमोक्षोविषयः। साध्यंयस्याः सातथाप्रसिद्धत्वात्कर्तृपदमाह। पं
डितैरिति। तत्रविद्याविद्ययोर्मध्येकिमतोन्यंनचिकेतसंजानासिनेत्याह। त्वामिति। नचिकेतसोविद्यायोग्यतायामाकांक्षापूर्वकमुत्तरवाक्यंहेतुपरत्वेनव्याचष्टे। कस्मा
दित्यादि। अविद्वद्बुद्धिप्रलोभिनोः विवेकबुद्धिवशीकरणसमर्थाः काम्यंतइतिकामाः श्रेयोमार्गात्तज्ज्ञानमार्गान्नविच्छेदंकृतवंतोविच्छिन्नसंबंधंनकृतवंतः संबंधविच्छे
दे हेतुमाह। आत्मेति। आत्मनाः स्मरःप्रभृतिकामेनजनितोयउपभोगः सुखंतस्यवांछाइच्छातस्याउत्पादनद्वारानविच्छेदंकृतवंतइत्यन्वयः। तात्पर्यमाह। अतइति।
यतस्तैर्नवशंनीतोः तइत्यर्थः। भाजनंपात्रंयोग्यमित्यर्थः विद्याभिनिवेशायाः विद्याधिकारिणोदर्शयति येत्वित्यादिना संसारभाजिनाः संसारयोग्याः अंतरंकार्यकरण

तत्कस्माद्यतोदूरंदूरेणमहतांतरेणैतेविपरीतेः न्योन्यव्यावृत्तरूपेविवेकाविवेकात्मकत्वात्तमः प्रकाशाविवविषूचीविषूच्योनानागतीभिन्नफलेसं
सारमोक्षहेतुत्वेनस्येतत्। केतइत्युच्यतेयाचाविद्याप्रेयोविषयाविद्येतिचश्रेयोविषयाज्ञातानिर्ज्ञातावगतापंडितैः तत्रविद्याभीप्सिनंविद्यार्थिनंनचि
केतसंत्वामहंमन्ये कस्माद्यस्मादविद्वद्बुद्धिः। प्रलोभिनः कामात्वाप्सरःप्रभृतयोबहवोपित्वात्वांनालोलुपंतनविच्छेदंकृतवंतः श्रेयोमार्गादात्मोपभोगा
भिवांछासंपादनेनातोविद्यार्थिनंश्रेयोभाजनंमन्यइत्यभिप्रायः। येतुसंसारभाजनाअविद्यायामंतरेमध्येघनीभूतइवतमसिवर्त्तमानावेष्ट्यमानाःपु

दूरमेतेविपरीतेविषूचीअविद्यायाचविद्येतिज्ञाता विद्याभीप्सिनंनचिकेतसंमन्येनत्वाकामाबहवोऽलोलुपंत॥ अविद्यायामंतरेवर्त्तमा
नाः स्वयंधीराःपंडितंमन्यमानाः। दंद्रम्यमाणाःपरियंतिमूढाअंधेनैवनीयमानायथांधाः॥

त्रपश्वादितृष्णापाशशतैः स्वयंवयंधीराः
प्रज्ञावंतःपंडिताःशास्त्रकुशलाश्चेतिमन्यमानास्ते अतोदंद्रम्यमाणाअत्यर्थंकुटिलामनेकरूपांगतिंगच्छंतोजरामरणरोगादिदुःखैः परियंति।
परिगच्छंतिमूढाअविवेकिनोऽंधेनैवदृष्टिविहीनेनैवनीयमानाविषमेपथियथाबहवोंधामहांतमनर्थंमृच्छंतितद्वत्॥

संघातसारभूतोमध्यमोदे

शस्तत्रवर्त्तमानास्तादात्म्याभिमानवंतः वेष्ट्यमानाबध्यमानाः कैरित्याकांक्षायामाह। पुत्रेतिपुत्रादितृष्णाएवपाशशतानितैरित्यर्थः अतएवस्वयंधीराःप्रज्ञा
वंतोवयमेवलौकिकप्रज्ञाशालिनःशास्त्रीयप्रज्ञाशालिनश्चइतिमन्यमानाइत्यर्थः। कार्यकरणाद्यभिमानशालिनांगतिमाह। तइति। पद्ङ्तद्रमगताविति धात्व
र्थमादायदंद्रम्यमाणाइतिपदंव्याचष्टे। कुटिलामित्यादिना। अनेकरूपामुत्तरायणादिरूपांगतिंमार्गमिच्छंतःप्रार्थयंतः। जराशब्दोदुःखहेत्ववस्थोपलक्षणार्थः।
रोगोधातुवैषम्यमादिशब्देनमनःपीडादिपरिग्रहः। तैर्जनितैर्दुःखैः परिगच्छंतिपरितःस्वर्गादिषुभ्रमंतीत्यर्थः। अविवेकिनः संसाराबध्यदर्शिनः तत्रदृष्टांतमा
ह। अंधेनैवेति। नयनस्थानमाह। विषमइति। कंटकपाषाणादिगर्त्तादिसहितइत्यर्थः। यथांधाइतिश्रुतिपदंव्याचष्टे। बहवइति। ॥ ॥ ॥

भा॰ टी॰

राम १०

मद्धोतमनर्थकंटकतोदनपंगुत्वदेहविशीर्णत्वादिरूपमृत्युं तिप्राप्नुवंतियथातद्बद्मंत्यविवेकिनइत्यन्वयः। पूर्वोक्तार्थहेतुत्वेनादायोत्तरंव्याचष्टे। अतएवेति। अतःशब्दा र्थमाह। मूढत्वादिति। परेकालेदेहपतनादूर्ध्वंसम्यगीयतेगम्यतइति सांपरायः। अथवासम्यक्परंइत्युपलक्षणंपरापरब्रह्मप्राप्तिकालेप्रारब्धविगमानंतरमित्यर्थः। तत्प्रा प्तिप्रयोजनःपरापरब्रह्मप्राप्तिः प्रयोजनंयस्यसतथासाधनविशेषश्चओंकारध्यानादिः शास्त्रीयः प्रसिद्धोयः सबालंपुत्रपश्वादिष्वासक्तत्वाद्विवेकिनंप्रतिनोपति ष्ठतेबालोनानुतिष्ठतीत्यर्थः। प्रमादंकुर्वन्तंव्याचष्टे। पुत्रेति। पुत्रादिसाध्यप्रयोजनेषुनकेवलमासक्तमनसंनभातिकिंत्वन्यथा पीत्याह॥ तथेति॥ मूढमिति॥ वित्ता तिरिक्तपुरुषार्थमपश्यंतंतदार्जनादौव्यासक्तचित्तमित्यर्थः। अतएवतमसाछन्नंइत्याह। तमसेति अविवेकेनेत्यर्थः। तंसांपरायोनभातीत्यन्वयः। ननुद्रव्यासक्त तयायंलोकोनभात्यपरस्तुभातीत्याशंक्यकैमुतिकन्यायेनाह। नत्वयमेवेति। लोकंविशिनष्टिस्त्र्यन्नेति। इतिशब्दउक्तपरामर्शीमानीतिवित्ततृष्णयाऽभिमानवा नित्यर्थः सकृदुत्पन्नस्यपुनःपुनर्यमवश्यतानुपपन्नेत्यतआह। जनित्वेति। प्रबंधःप्रवाहः ननुधर्मार्थकामेषुसर्वएवलोकआसक्तश्चेद्विद्याधिकारिणोऽभावादुपनिष

अतएवमूढत्वान्नसांपरायःप्रतिभातिसंपरेईयतइतिसंपरायःपरलोकस्तत्प्राप्तिप्रयोजनःसाधनविशेषःशास्त्रीयःसांपरायःसबालंअविवेकिनं प्रतिनप्रतिभातिनप्रकाशतेनोपतिष्ठतेइत्येतत्। प्रमाद्यंतंप्रमादंकुर्वंतंपुत्रपश्वादिप्रयोजनेषुआसक्तमनसंतथावित्तमोहेनवित्तनिमित्तेनाविवे केनमूढंतमसाछन्नंसंतं। नत्वयमेवलोकोयोयंदृश्यमानःस्त्र्यन्नपानादिविशिष्टोनास्तिपरोऽदृष्टोलोकइत्येवंमननशीलोमानीपुनःपुनर्जनित्वावश

नसांपरायःप्रतिभातिबालंप्रमाद्यंतंवित्तमोहेनमूढं अयंलोकोनास्तिपरइतिमानीपुनःपुनर्वशमापद्यतेमे। श्रवणायापिबहुभिर्योनल भ्यःशृण्वंतोपिबहवोयंनविद्युः।

मदधीनतामापद्यतेमेमृत्योर्मम। जननमरणादिलक्षणदुःखप्रबंधारूढएवभवतीत्यर्थः। प्रायेणह्येवंविधएवलोकः। यस्तुश्रेयोर्थीसहस्रेषुकश्चिदेवात्मविद्भवतित्वद्विधोयस्माच्छ्रवणायापिश्रवणार्थंश्रोतुमपिनलभ्यआत्माबहुभिरनेकैःशृण्वंतोपिबहवोऽनेकेअन्येयमा त्मानंनविद्युर्नविदंतिअभागिनोऽसंस्कृतात्मानोनविजानीयुः॥ दोव्यर्थतेत्याशंक्याह। प्रायेणेति। उत्सर्गतःकामाद्यासक्तएवजनइत्यर्थः हिशब्दःप्रसिद्ध्यर्थकः ।यस्त्वनेकजन्मार्जितसुकृतप्रसादासादितशुद्धबुद्धिःकामादिविमुखोनिरतिशयपुरुषार्थब्रह्मप्रत्यक्त्वेनजानातिसहस्रेषुनचिकेतःसदृशःकश्चिदेवभवतीत्याह। यस्ति ति। तत्रहेतुपरमुत्तरमाह। यस्मादिति। ननुमैघमंदेशायुसन्नप्यर्थःश्रूयतइत्याशंक्याह। श्रवणार्थमिति। तस्यव्याख्याश्रोतुमपीत्यनेकैःश्रोतुमपियोनलभ्यतइत्यन्वयः अयमाशयःश्रवणस्यदृष्टफलत्वान्निर्विषयस्यचसाक्षात्काराजनकत्वोज्जनितस्यापिप्रतिभाप्रत्ययवत्भ्रांतित्वादात्माविषयएवएष्टव्यइतिकेषांचिच्छ्रोतुंदुर्लभोन्ये षांज्ञातुंदुर्लभइत्याह॥ शृण्वंतोपीति॥ अन्यइतिपूर्वोक्ताधिकारिभ्यइत्यर्थः। नविदंतीत्येतद्धेतुपूर्वकंव्याचष्टे। अभागिनइति। तद्व्याचष्टे असंस्कृतेतिनित्यनैमि त्तिकैरसंस्कृतआत्मांतःकरणंयेषांतेतथोक्ताः। यस्माच्छ्रोतारश्चज्ञातारश्चदुर्लभास्तस्मात्कश्चिदेवाधिकारीभवतीतिपूर्वेणान्वयः॥ ॥ ॥

एवंश्रोतारंमहीकृत्यवक्तारंमहीकरोति। किंचेति। नकेवलंश्रोतादुर्लभःवक्तापीत्यर्थः। अस्यात्मनः आश्चर्यशब्दोऽद्भुतवाचीति। तत्सदृशेलक्षणेत्याह। अद्भुतवदेवेति। यथा नेकेषुपदार्थेषुकश्चिदेवपदार्थआश्चर्यकरएवंवक्तापिकश्चिदेवभवतीत्यर्थः। वक्तृत्वदौर्लभ्यानंतरंश्रोतृष्वनेकेषुलब्ध्याप्यात्मनःकुशलएवकश्चिदेवभवतीत्याह। तथेति यथावक्तादुर्लभस्तथेत्यर्थः। कुशलएवयुक्त्यनुभवसमर्थएव। तत्रहेतुमाह। यस्मादिति॥ निपुणेनसाक्षात्कृतब्रह्मतत्वेनाचार्येणानुशिष्टोवेदांतैःशिक्षितःसन्ज्ञाता साक्षात्कारवान्कश्चिदेवभवतियस्मात्तस्मात्कश्चिदेवात्मनोलब्धेत्यन्वयः। ननुवाक्यार्थव्युत्पत्तिमताप्याचार्येणानुशिष्टोधिकारीस्वाधिकारसामर्थ्यात्ज्ञास्यति लब्ध्याचभविष्यतीत्याशंकतेकस्मादितिश्रोत्रियंब्रह्मनिष्ठमितिश्रुत्यंतरेव्युत्पत्तिव्यतिरेकेणब्रह्मनिष्ठतायाआचार्यविशेषणत्वेनश्रुतत्वात्तादृगाचार्योक्तआत्मा ज्ञातुंलब्धुंचशक्यइत्याह। नतरेणेत्यादिना। मनुष्येणमनुष्यत्वाभिमानवताः तएवावरेणावरपदार्थमाह। हीनेनेति। प्राकृतबुद्धिनाप्रकृतितआगतेषुपश्वादिष्वभिमा

किंनास्यवक्ताप्याश्चर्यः अद्भुतवदेवानेकेषुकश्चिदेवभवतितथाश्रुत्वाप्यस्यात्मनःकुशलोनिपुणएवानेकेषुलब्ध्याकश्चिदेवभवतियस्मादाश्चर्यो ज्ञाताकश्चिदेवकुशलानुशिष्टः। कुशलेननिपुणेनाचार्येणानुशिष्टःसन्। कस्मान्नहिनरेणमनुष्येणावरेणप्रोक्तोऽवरेणहीनेनप्राकृतबुद्धिनेत्येत तदुक्तएषआत्मायंत्वंमांपृच्छसिनहिसुष्ठुसम्यक्विज्ञेयोविज्ञातुंशक्योयस्माद्बहुधाअस्तिनास्तिकर्ताअकर्ताशुद्धोऽशुद्धइत्याद्यनेकधाचिंत्यमा

आश्चर्योवक्ताकुशलोस्यलब्धाआश्चर्योज्ञाताकुशलानुशिष्टः। ननरेणावरेणप्रोक्तएषसुविज्ञेयोबहुधाचिंत्यमानःअनन्यप्रोक्ते {गतिरत्रनास्ति

नोवादिभिः। कथंपुनःसुज्ञेयइत्युच्यते। अनन्यप्रोक्तेऽनन्येनापृथग्दर्शिनाऽचार्येणप्रतिपाद्यब्रह्मात्मभूतेनप्रोक्तेउक्तेआत्मनिग तिरनेकधाऽस्तीत्यादिलक्षणाचिंतागतिरत्रास्मिन्नात्मनिनास्तिनविद्यतेसर्वविकल्पगतिप्रत्यस्तमितत्वादात्मनः। अथवास्वात्मभूतेऽनन्यस्मिन् आत्मनिप्रोक्तेऽनन्यप्रोक्तेगतिरत्रान्यावगतिर्नास्तिज्ञेयस्यान्यस्याभावात्। ज्ञानस्यह्येषापराकाष्ठायदात्मैकत्वविज्ञानं॥ नरूपाबुद्धिर्यस्यसःप्राकृ

तबुद्धिस्तेनेत्यर्थः। यंपृच्छसियेयमित्यादिनेतिशेषः। तत्रहेतुमाह। यस्मादिति शून्यवादिव्यतिरिक्तवादिभिरस्तीतिचिंत्यमानस्तैर्नास्तीतिचिंत्यमानोस्तीतिपक्षेसांख्यव्य तिरिक्तैःकर्ताशुद्धइतिअकर्ताशुद्धइतिवेदांतिभिश्चसएवब्रह्माभिन्नइतिचिंत्यमानोयस्मात्तस्माद्धिप्रतिपत्तिमताह्युपदिष्टोर्थोनलब्धुंशक्यइतिभावःकेनाचार्ये णोपदिष्टात्माज्ञातव्यइतिपृच्छति। कथमिति। प्रतिपाद्यब्रह्मात्मभूतेनजीवन्मुक्तेनशिष्यबुद्धिपरिपाकप्रेरणावताह्युपदिष्टआत्मालब्धुंशक्यइत्याह। उच्यतइति। नान्योनन्यस्तेनब्रह्मणःसकाशादितिशेषः विषयेणविषयीलक्ष्यतइत्याह। अपृथग्दर्शिनेति। अभेददर्शिनेत्यर्थः। तदेवविवृणोति। प्रतिपाद्येति। वेदांतैःप्रतिपाद्यो ज्ञेयोयोऽभिन्नात्मातत्स्वरूपेणेत्यर्थः। आत्मन्युक्तेसतीत्यन्वयः। गतिशब्दस्यपूर्वोक्तविकल्पविषयचिंतापरत्वमादायव्याचष्टे। गतिरिति। सर्वेचतेविकल्पाश्च सर्वविकल्पास्तद्विषयागतयश्चिंताप्रत्यस्तमितालीनायस्मिन्तस्यभावस्तत्वंतस्मादाचार्यपदाध्याहारेणार्थांतरमाह। अथवेति। स्वात्मभूतेब्रह्मात्मभूतेऽनन्य



इदंत्वंकृष्णात्मनिप्रोक्तेकैवल्यपरिकेसतीतिलक्षणः॥

अत्रात्मनि ब्रह्माहमस्मीत्यवगतेरन्येति शेषः। ज्ञेयस्यान्यस्याभावादिति ब्रह्मात्मैक्याद्भिन्नस्याभावादित्यर्थः। आत्मैकत्वेन विज्ञप्तिरभिव्यक्तिरात्मैकत्वविज्ञानं फलितमाह। अतइति। यतो ब्रह्मात्मैकत्वमेवद्वेद्यं तद्ज्ञानं गतिरतइत्यर्थः गंतव्याभावाद्गंतव्यांतराभावाद्यतोनप्राप्तव्यांतरमतो गतिर्ज्ञानांतरं नावशिष्यत इत्यर्थः। गतिरत्र नास्तीत्यंशस्यार्थांतरमाह। संसारगतिर्वेति। अनन्य आत्मनि गुरुणा प्रोक्ते आत्मनि संसारगतिः संसारप्रतिभासः सत्यत्वेन नास्ति कर्तृत्वादेः संसारस्याभासएव प्रत्ययइति भावः। ननु विज्ञानस्य न संसारनिवृत्तिः मुख्यं फलं तत्कथं संसारावगतिनिषेधइतिनेत्याह। नांतरीयकत्वादिति विज्ञानफलस्य मोक्षस्यानंदावाप्तेः संसारनिवृत्तिर्नांतरीयकत्वादित्यर्थः। अगतिरिति परिच्छेदेनार्थांतरमाह। अथवेति। प्रोच्यमानं यद्ब्रह्म तदात्मभूतेनाचार्येण शिष्यबुध्याविंबेश्वरभूतेनोपदिष्टआत्मनि शिष्यस्याधिकारिणो ऽनवबोधआत्मविषयेनास्त्येवंबोधोभवत्येवेत्यर्थः। इदमुपलक्षणं प्रतिबद्धबोधस्यापि बोधेप्रतिबंधोनभवतीतिभावः। श्रोतुर्बोधमभिनीयदर्शयति। तदहमस्मीति तत्पत्यगभिन्नमहमस्मीत्यर्थः तदनन्योहमिति पाठेप्ययमेवार्थः। तत्रोपमानमाह। आचार्यस्येवेति। वृत्तानुवादपूर्वकमुत्तरवा

अतोऽवगंतव्याभावान्नगतिरत्रावशिष्यते संसारगतिर्वात्र नास्त्यनन्य आत्मनि प्रोक्ते नांतरीयकत्वात्तद्विज्ञानफलस्य मोक्षस्य। अथवा प्रोच्यमानब्रह्मात्मभूतेनाचार्येण प्रोक्त आत्मन्यगतिरनवबोधोऽपरिज्ञानमत्र नास्ति भवत्येवावगतिस्तद्विषया श्रोतुस्तदहमस्मीत्याचार्यस्येवेत्यर्थः। एवं सु-

अणीयान्ह्यतर्क्यमणुप्रमाणात्।

विज्ञेय आत्मा आगमवताचार्येणानन्यतया प्रोक्तः इतरथाऽणीयानणुतरः अणुप्रमाणादपि संपद्यत आत्मा। अतर्क्यमतर्क्यः स्वबुद्ध्याभ्यूहेन केवलेन तर्केण तर्क्यमाणे अणुप्रमाणे केनचित्स्थापित आत्मनि ततोऽणुतरमन्योऽभ्यूहति ततोऽप्यन्योऽणुतममिति।

क्यमवतारयति। एवमिति। अनन्यतयास्थितेनाचार्येण प्रोक्त आत्मा सुविज्ञेय इति प्रथमव्याख्यानुवादः नकेवलमाचार्येणोपदिष्ट आत्मा अपित्वागमेनापीत्याह। आगमवतेति। अवगमवतेति पाठः सुगमः द्वितीयव्याख्याने आचार्येणानन्यतयाः नन्यइत्येवंरूपेण प्रोक्त आत्मा सुविज्ञेय इत्यनुवादः। तृतीयसमः चतुर्थे आचार्येण प्रोक्त आत्मा सुविज्ञेय इति एवकाराध्याहारेणानुवादो व्याख्येयः। पृथग्दर्शिना तूपदिष्टआत्मा परोक्ष एवेत्याह। इतरथेति। पृथग्दर्शिनोपदिष्ट आत्मा अणुः परोक्षः परोक्षादपि परोक्षः। अणीयानणुप्रमाणादप्यल्पपरिमाणादप्यणीयान्संपद्यत इत्यर्थः। हिरप्यर्थः। अल्पपरिमाणादप्यणुतरः संपद्यत आत्मेत्यत्र हेतुमाह। अतर्क्यमिति। अणीयानित्युपक्रमे पुल्लिंगनिर्देशादतर्क्यमिति नपुंसकः पुल्लिंगत्वेन विपरिणेय इत्याह। अतर्क्य इति। तर्क्येण इति यस्तर्क्यः न तर्क्यो ऽतर्क्यः ननु तर्कस्यानुमानरूपत्वेन प्रमाणत्वाच्छ्रुतिवद्वस्त्ववबोधकत्वात्कथं तर्कागम्य आत्मेत्यत आह। स्वबुध्याभ्यूहेनेति स्वाधीना बुद्धिः स्वबुद्धिः न गुर्वाद्युपदेशेन संस्कृता तयाभ्यूह आरोपस्तेन तर्केणेत्यर्थः। तथा सत्यनुमानस्य मंतव्य इति श्रुत्या वेदांतसहायत्वमुक्तं बाधितं स्यादित्याशंक्याह। केवलेनेति। श्रुत्यसहायेनेत्यर्थः। तथा च श्रुत्यनुकूलतर्कस्य समूलत्वात्प्रामाण्येपि केवलस्यनार्थनिश्चायकतेति भावः केवलेन तर्केणातर्क्य इत्यन्वयः। विपक्षे दंडमाह। तर्क्यमाण इति। तर्क्यमाणे ॥ ॥

क० उ० १२ — भा० टी०

आत्मनि केन चित्तार्किकेणाणुपरिमाणे स्थापित इत्यन्वयः। एकेनाणुत्वेन स्थापित आत्मन्यन्योपि तार्किकं मन्योऽन्यथाभ्यूहतीत्याह। ततइति। ततः पूर्वस्मात्परिमाणादणुतां। ततोपि परीक्ष्यतां अन्यस्तार्किक ऊहति हि प्रसिद्धमेतत्। नतोपीति। पूर्ववत्। ननु कश्चित्तार्किकाग्रणीः परिमाणस्य निष्ठां वेत्स्यतीति नेत्याह। नहीति। कुत्सितस्तर्कः कुतर्कः। उत्प्रेक्षामात्रनिबंधनस्तस्य निष्ठा कस्मिंश्चिद्विषये परिसमाप्तिः काचिदपि न विद्यत इत्यर्थः। फलितमाह। अतइति। यतस्तर्कानधीनाऽत इत्यर्थः। अनन्येनाऽपृथग्दर्शिना प्रोक्त आत्मनि विषय आगमप्रतिपाद्यातरतिशोकमात्मविदित्यागमेन फलत्वेन प्रतिपाद्या येयं मतिरेषा तर्केण न प्रापणीया न परिणेयेत्यर्थः। पुनर्नकारग्रहणमन्वयार्थं। अर्थांतरमाह। नापनेतव्येति। नह्यातव्या न बाधनीया वा शब्दः पक्षांतरद्योती। प्रथमपक्षे ह्यात्मविषया मतिर्न तर्केण जननीयेत्यर्थः। द्वितीये कुतर्कादिनाऽऽगमजनितमतिर्न बाधनीयेत्यर्थः। नन्वागमानुकूलतर्कस्यापि निषेधः स्यादित्याशंक्य कुतर्कस्यैव निषेध इत्याह। तार्किक इति यत्किंचिदेव कथयतीत्यन्वयः। यत्किंचित्प्रत्यगभिन्नस्य तटस्थत्वादिकं तदपि प्रमाणमूलमिति चेन्नेत्याह। स्वबुद्धिपरिकल्पितमिति तत्र हेतुः। अनागमज्ञ इति हि यस्मादागमार्थानभिज्ञस्तार्किकस्तस्मात्स्वबुद्धिपरिकल्पितमेव यत्किंचित्कथयतीत्यन्वयः। अ

नहि कुतर्कस्य निष्ठा क्वचिद्विद्यते अतोऽनन्यप्रोक्त आत्मनि उत्पन्ना येयमागमप्रतिपाद्यात्ममतिर्नैषा तर्केण स्वबुद्ध्याभ्यूहमात्रेणापनेयान प्रापणीयेत्यर्थो नापनेतव्या वा नो पहंतव्या तार्किको ह्यनागमज्ञः स्वबुद्धिपरिकल्पितं यत्किंचिदेव कल्पयति अत एव च येयमागमप्रभूता मतिरन्येनैवागमाभिज्ञेनाचार्येणैव तार्किकात्प्रोक्ता सती सुज्ञानाय भवति हे प्रेष्ठ प्रियतम का पुनः सा तर्कागम्या मतिरित्युच्यते यां त्वं मतिं मद्वरप्रदानेनआ

नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा। ॥

पः प्राप्तवानसि सत्यावितथविषया धृतिर्यस्य तव स त्वं सत्यधृतिर्बतासीत्यनुकंपयन्नाह मृत्युर्नचिकेतसं वक्ष्यमाणविज्ञानस्तुतये त्वादृक्त्वत्तुल्यो नोऽस्मभ्यं भूयात् भवतु अन्यः पुत्रः शिष्यो वा प्रष्टा कीदृक् यादृक्त्वं हे नचिकेतः प्रष्टा। पुनरपि तुष्ट आह। पृथग्दर्शिनाचार्येणोपदिष्ट आत्मा ज्ञातुं शक्य इ

त्युक्तमर्थं श्रुतिर्निगमयतीत्याह। अत एवेति। यतस्तर्कजन्या न भवतीत्यत इत्यर्थः। कस्मादन्येनेत्यपेक्षायां पूरयति। तार्किकादिति। प्रोक्ता प्रकर्षेणोपदिष्टेत्यर्थः। सुज्ञानाय साक्षात्काराय प्रियतमेति संबोधनं नचिकेतसः आकांक्षापूर्वकमुत्तरवाक्यमवतारयति। का पुनरिति। मत्तेरुत्तरक्षणे प्राप्यमाणत्वादाप्तवानसीति निर्देशः वरप्रदानस्याग्निविद्यादिप्राप्तिपर्यंतत्वाद्वाऽसीति निर्देशः। अवितथः परमार्थ आत्मा विषयो यस्याः सा तथा अनुकंपयन् दयां कुर्वन्नित्यर्थः। नचिकेतसमनुकंपयन्वक्ष्यमाणज्ञानस्तुतये आहेत्यन्वयः हे नचिकेतः यादृक्त्वं प्रष्टा त्वत्तुल्योऽस्मभ्यं तादृक् पुत्रः शिष्यो वा भवत्वित्युत्तरवाक्यान्वयः। मया जानतापि ब्रह्मयासं कर्म कृतं तत्फलं दीयमानमपि न गृण्हासि ततो मत्तोप्यधिकतरप्रज्ञोसीति संतोषात्तुष्टो नीत्याह। पुनरपि तुष्ट आहेत्यादिना शेवधिशब्देन निधिशब्दपर्यायेण कथं कर्मफलमुच्यते भूस्थापितहिरण्याद्यर्थकत्वान्निधिशब्दस्येत्याशंक्य कामनाविषयत्वगुणयोगाच्छेवधिशब्दः कर्मफले विद्यत इत्याह॥

राम १२

निधिरिवेति। शेवधिशब्दस्य पुल्लिंगत्वादाह अनित्यमनित्यइतीति तन्नप्राप्यतइत्यन्वयः ध्रुवशब्दार्थमाह। परमात्मेति। तर्ह्यनित्यसुखप्राप्तिः केनेत्यत आह। यस्त्विति॥ ११९
हेनचिकेतः नित्यमनित्यसाधनैर्नप्राप्यतइ तिजानतापिमयाग्निश्चितइत्यन्वयः। पदार्थमुक्त्वावाक्यार्थमाह। अनित्यैरिति। तेनचितेनाग्निनाधिकारापन्नः धर्माधर्मफलयोः
प्रदानेनजंतूनांनियंतृत्वमापन्नः याम्यमिति यमयतिनियच्छतीतियमः तस्येदंयाम्यंतेनाधिष्ठितमितियावत्। ननुकर्मफलस्यतद्यथेहेत्यादिश्रुत्यानित्यत्वश्रवणात्कथंनित्य
त्वंतत्राह आपेक्षिकमिति। किंचित्कालावस्थायीत्यर्थः। आहिरण्यगर्भपदाद्धिरक्तस्यब्रह्मविद्यायामधिकारद्योतनद्वंयितुंप्रष्टारंस्तौति। त्वंत्विति॥ अत्रैवेतिपदंव्याचष्टे
इहैवेतिहिरण्यगर्भपदेइत्यर्थः हिरण्यगर्भपदस्याध्यात्माधिभूतादिसहितसर्वजगदाश्रयत्वेहेतुमाह। सर्वात्मकत्वादिति। आनंत्यपदापेक्षितक्रतुफलं। हिरण्यगर्भपदमि।

जानाम्यहंशेवधिर्निधिःकर्मफलंनिधिरिवप्रार्थ्यतइति असावनित्यमनित्यइतिजानामिनहियस्मादनित्यैरध्रुवैर्यन्नित्यंध्रुवंतत्प्राप्यतेपरमात्माख्यःशे
वधिः यस्त्वनित्यसुखात्मकःशेवधिःसएवानित्यैर्द्रव्यैःप्राप्यतेहियतस्ततस्तस्मान्मयाजानतापिनित्यमनित्यसाधनैर्नप्राप्यतइतिनचिकेतश्चितोऽग्नि
रनित्यैर्द्रव्यैःपश्वादिभिःस्वर्गसुखसाधनभूतोऽग्निर्निर्वर्तितइत्यर्थः। तेनाहमधिकारापन्नोनित्यंयाम्यंस्थानंस्वर्गाख्यंनित्यमापेक्षिकंप्राप्तवानस्मि त्वंतुकाम
स्याप्तिंसमाप्तिंअत्रैवइहैव सर्वेकामाःपरिसमाप्ताःजगतःसाध्यात्माधिभूताधिदैवादेःप्रतिष्ठामाश्रयंसर्वात्मकत्वात्क्रतोरुपासनायाःफलंहैरण्यगर्भपदं

जानाम्यहंशेवधिरित्यनित्यंनह्यध्रुवैःप्राप्यतेहिध्रुवंतत् ततोमयानाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैःप्राप्तवानस्मिनित्यं। कामस्याप्तिंजगतः१
प्रतिष्ठांक्रतोरनंत्यमभयस्यपारंस्तोमंमहदुरुगायंप्रतिष्ठांदृष्ट्वाधृत्याधीरोनचिकेतोऽत्यस्राक्षीः तंदुर्दर्शंगूढमनुप्रविष्टंगुहाहितंगह्वरेष्ठंपुराणं

अनंत्यंआनंत्यंअभयस्यचपारंपरांनिष्ठांस्तोमंस्तुत्यंमहत्अणिमाद्यैश्वर्याद्यनेकगुणसंहतंस्तोमंचततमहच्चनिरतिशयत्वात्उरुगायंविस्तीर्णांगतिंप्रति
ष्ठांस्थितिमात्मनोनुत्तमामपिदृष्ट्वाधृत्याधैर्येणधीरोधीमान्सन्नचिकेतोऽत्यस्राक्षीःपरमेवाकांक्षन्अतिसृष्टवानसिसर्वमेतत्संसारभोगजातंअहोब१
तानुत्तमगुणोसि यंत्वंज्ञातुमिच्छसिआत्मानं तंदुर्दर्शंदुःखेनदर्शनमस्येतिदुर्दर्शंअतिसूक्ष्मत्वात्तंगूढंगहनंअनुप्रविष्टं

त्याह। क्रतोःफलमित्यादिनाक्रतुर्हिर
ण्यगर्भोपासना। आनंत्यमापेक्षिकं। एवमुत्तरपदेष्वपिद्रष्टव्यं। भाष्येप्रथमचकारः आनंत्याभयसमुच्चयार्थः। द्वितीयःस्तोममहत्वगुणसमुच्चयार्थः। संहतमितिविशिष्टमित्यर्थः
पदार्थमभिधायतदनुवादेनहेतुंदर्शयति। स्तोमंचेत्यादिना। अनेककालावस्थायिहिरण्यगर्भपदंगम्यतइतिव्युत्पत्याविस्तीर्णगतिरित्युच्यते। हेनचिकेतइति। संबोधनमत्यस्रा
क्षीरित्यत्रद्रष्टव्यं किंत्यक्तवानसीतिअपेक्षायांप्रोक्तहिरण्यगर्भपर्यंतसंसारभोगजातमितिआह। सर्वमेतदितिउपक्रांतश्रोतृप्रशंसामुपसंहरति। अहोबतेति। यश्चत्वयादे
हव्यतिरिक्तआत्मापृष्टस्तस्यैवपरमार्थस्वरूपविज्ञानंसनिदानसंसारनिवर्तकंपरमानंदप्राप्तिसाधनमतःपरंश्रेयःसाधनंधर्मश्चनास्तीति पृष्टस्यवस्तुनःप्रशंसयाचप्रष्टरंप्रशं
सतेयंत्वंज्ञातुमिच्छसीत्यादिना। यमात्मानंज्ञातुमिच्छसितमित्यन्वयः यंचत्वमितिक्वचित्पाठः। दुःखेनेतिअत्यंतायासेनेत्यर्थः। तदुक्तं। कश्चिन्मांवेत्तितत्वतइति तत्रहेतुमाह। अति

नि

क· उ· १३

र्गममिति परमसूक्ष्माकाशादेरपिकारणत्वादतिसूक्ष्ममतो दुर्दर्शमिति अर्थः॥ गूढमनुप्रविष्टमित्यस्य तात्पर्यार्थमाह॥ प्राकृतेति विषयाः शब्दादयः तन्वनंतायामविस्तारस्य नबुद्धौ स्थितत्वमिति शंक्याह। तन्नेति। बुद्धावित्यर्थः। अनर्थाः रागद्वेषादयस्तैः संकटेत्यंतायासजनके कार्यकारणसंघात इत्यर्थः। गूढमनुप्रविष्टत्वं गुहाहितत्वं गव्हरेष्ठत्वे हेतुस्तत्त्वं दुर्दर्शत्वे हेतुरित्याह। यत एवमित्यादिना यतो गव्हरेष्ठः अतः इत्यर्थः। पुरातनं सनातनमित्यर्थः। अधिगमेनेति। प्राप्त्येत्यर्थः धीरः अध्यात्मयोगाधिगमेन देवमात्मानं मत्वा हर्षशोकौ जहातीत्यन्वयः। हर्षशोकोपलक्षितसंसारनिवृत्तौ हेतुमाह। आत्मन इति। स्वोत्कर्षप्रयुक्तं सुखादि परोत्कर्षप्रयुक्तं दुःखादि स्वापकर्षप्रयुक्तं दुःखादि परापकर्षप्रयुक्तं सुखादिरभावस्तस्मादपगछत इत्यर्थः। अत्र धीरो बुद्धिमानिति श्रवणमननसत्वमुच्यते। अध्यात्मयोगशब्देन निदिध्यासनमुच्यते। मत्वेति साक्षात्कार उच्यते आत्मतत्त्वज्ञानस्य सनिदानसंसारनिवर्तकत्वमादर्शयानंदावाप्तिसाधनतामाह किंचेति वक्ष्यामीति। नजायत इत्यारभ्येति द्रष्टव्यं। स्वाधीनश्रवणं व्यावर्तयति। आचार्यप्रसा

प्राकृतविषयविकारैः प्रछन्नमित्येतत् गुहाहितं गुहायां बुद्धौ आहितं निहितं स्थितं तत्रोपलभ्यत्वात्। गव्हरेष्ठं गव्हरे विषमे अनेकानर्थसंकटे तिष्ठतीति गव्हरेष्ठं यत एवं गूढमनुप्रविष्टो गुहाहितश्चातो गव्हरेष्ठः अतो दुर्दर्शः तं पुराणं पुरातनं अध्यात्मयोगाधिगमेन विषयेभ्यः प्रतिसंहृत्य चेतस आत्मनि समाधानमध्यात्मयोगस्तस्याधिगमस्तेन मत्वा देवमात्मानं धीरो धीमान् हर्षशोकौ आत्मन उत्कर्षापकर्षयोरभावात् जहाति किंचैतदात्मतत्त्वं यदहं वक्ष्या

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य। स मोदते मोदनीयं हि लब्ध्वा {विवृतं सद्म नचिकेतसं मन्ये

मि श्रुत्वाचार्यप्रसादात्सम्यगात्मभावेन परिगृह्य उपादाय मर्त्यो मरणधर्मा धर्मादनपेतं धर्म्यं प्रवृह्य उद्यम्य पृथक्कृत्य शरीरादेः अणुं सूक्ष्मं एतमात्मानं आप्य प्राप्य स मर्त्यो विद्वान्मोदते मोदनीयं हर्षणीयमात्मानं लब्ध्वा। तदेतदेवंविधं ब्रह्म सद्म भवनं नचिकेतसं त्वां प्रति अपावृतद्वारं विवृतं अभिमुखीभूतं मन्ये मोक्षार्हं त्वां मन्य इत्यभिप्रायः यद्यहं योग्यः प्रसन्नश्चासि भगवन्मां प्रति।

दादिति। अथवाचार्यप्रसादात्संपरिगृह्येति योजना आत्मभावेन परिगृह्येति मननेन ब्रह्मतत्त्वं श्रुतं प्रत्यगात्मत्वेन निश्चित्येत्यर्थः। प्रायेण मनुष्याधिकारत्वाच्छास्त्रस्येति मर्त्यग्रहणं। तत्वज्ञानस्योत्तमधर्मत्वमाह। धर्मादिति। कस्मात्पृथक्कृत्येत्यपेक्षायामाह। शरीरादेरिति। पृथक्करणं निदिध्यासनं प्राप्तिः साक्षात्कारः। मोदनीयमात्मानं लब्ध्वा स विद्वान्मोदत इत्यनेनानंदावाप्तिरुक्ता। एवंवस्तु प्रशंसां कृत्वा प्रष्टारं प्रशंसतीत्याह। तदेवमित्यादिना। तदिति तस्मादित्यर्थः यस्माद्विद्वान् साक्षात्कारान्निरतिशयब्रह्म प्राप्नोति तस्मादित्यर्थः। एवंविधमिति निरतिशयानंदस्वरूपमित्यर्थः। ब्रह्मैव सद्म ब्रह्मसद्म भवनं गृहं प्राप्यस्थानमित्यर्थः अभिमुखीभूतमिति प्रसन्नमित्यर्थः। यमेवैष वृणुत इति श्रुतेः पदार्थमुक्त्वा तात्पर्यार्थमाह। मोक्षार्हमिति। यद्यादौ पृष्टस्य देहव्यतिरिक्तस्यात्मनः पारमार्थिकस्वरूपज्ञानमेव श्रेयः साधनं तर्हि तदेव ब्रूहि इति नचिकेता आह। यद्यहं योग्य इत्यादिना। अत एव वरदानव्यतिरेकेणापूर्वोयं प्रश्न इति नाशंकनीयं। येयं प्रेते इत्यादिना पृष्टस्यैव देहव्यतिरिक्तस्यात्मनो याथात्म्यप्रश्नोयं पृष्टस्य वस्तुन ओंकारोपासनादिरूपविशेषणांतरं ज्ञानसाध

भा· टी·

मोंप्रति यदि प्रसन्नश्चासि मह्यं तद्ब्रूहीत्यन्वयः किं तदित्यपेक्षायामाह। अन्यत्रेत्यादिना धर्मत्वेन प्रसिद्धिचैत्यवंदनादेरधर्मत्वख्यापनाय शास्त्रीयादिति विशेषणं। ननु धर्मा नुष्ठानादन्यदित्युक्ते तत्फलं तत्कारकं चात्मा स्यादित्याशंक्य धर्मग्रहणस्योपलक्षणत्वान्न दोष इत्याह॥ तत्फलादित्यादिना॥ अधर्मादन्यदित्यत्राप्युपलक्षणं तुल्यं अन्यत्रेत्य न्यदित्यर्थः। कार्यकारणपरिच्छेदकात्कालादप्यन्यदित्याह। किंचेति। प्रथमश्चकारो तिक्रांतवस्त्वन्यत्वसमुच्चयार्थः भविष्यतश्च कालादित्यनुवर्त्तते हि द्वितीयश्चकारो भविष्य त्कालपरिच्छिन्नवस्त्वन्यत्वसमुच्चयार्थो वर्तमानकालान्यत्वतत्परिच्छिन्नवस्त्वन्यत्वसमुच्चयोपलक्षणार्थश्च पदार्थमुक्त्वा वाक्यार्थमाह। कालेति ईदृशं वस्त्विति व्या चष्टे सर्वैरिति। उत्तरमवतारयति। एवमिति। विशेषणांतरं चेत्योंकारोपासनमित्यर्थः। सर्वे वेदा इति तदेकदेशा उपनिषद उच्यंते तं त्वौपनिषदमित्यादिश्रुत्या साक्षाज्ज्ञानसाध नत्वेन विनियुक्ताः। गमनीयमिति प्राप्तव्यमित्यर्थः। अविभागेनाविप्रतिषेधेनैककंठ्येनेत्यर्थः तपांसि कर्माणि ननु कर्मणां शुद्धिद्वारेण ज्ञानसाधनत्वात्कमाणत्वाभा

अन्यत्र धर्माच्छास्त्रीयाद्धर्मानुष्ठानात्तत्फलात्तत्कारकेभ्यश्च पृथग्भूतमित्यर्थः तथान्यत्राधर्मात्तथान्यत्रास्मात्कृताकृतात् कृतं कार्यमकृतं का रणं अस्मादन्यत्र किंचान्यत्र भूताच्चातिक्रांतात्कालाद्भव्याच्च भविष्यतश्च तथा वर्त्तमानात्कालत्रयेण यन्न परिच्छिद्यत इत्यर्थः यदीदृशं वस्तु सर्वव्य वहारगोचरातीतं पश्यसि जानासि तद्वद मह्यं॥ इत्येवं पृष्टवते मृत्युरुवाच पृष्टं वस्तु विशेषणांतरेण च विवक्षन्। सर्वे वेदा यत्पदं पदनीयं गमनीयं अवि

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद॥ सर्वे वेदा यत्पदमामनंति तपां सि सर्वाणि च यद्वदंति। यदिच्छंतो ब्रह्मचर्यं चरंति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्। एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परं॥

भागेनामनंति प्रतिपादयंति तपांसि सर्वाणि च यद्वदंति यत्प्राप्त्यर्थानि भवंतीत्यर्थः। यदिच्छंतो ब्रह्मचर्यं गुरुकुलवासलक्षणं अन्यद्वा ब्रह्मप्राप्त्यर्थं चरं ति तत्ते तुभ्यं पदं यज्ज्ञातुमिच्छसि संग्रहेण संक्षेपतः ब्रवीम्योमित्येतत॥ तदेतत्पदं यद्बुभुत्सितं त्वया यदेतदोमित्योम्शब्दवाच्यमोंशब्दप्रतीकं च अ त एतद्ध्येवाक्षरं ब्रह्मापरमेतद्ध्येवाक्षरं परं च। तयोर्हि प्रतीकमेतदक्षरमेतद्ध्येवाक्षरं ज्ञात्वोपास्य ब्रह्मेति यो यदिच्छति परं अपरं वा तस्य तद्भवति॥ ॥

वा इति ब्रूहीत्ययुक्तमनुपपन्नमित्याशंक्य वदंतिरत्र लक्षणयेत्याह। यत्प्राप्त्यर्थानीति। यदिति गुरुकुलवासलक्षणमिति नैष्ठिकं ब्रह्मचर्यमित्यर्थः। अन्यद्वेतींद्रविरोचनाख्यायिका भिहितब्रह्मविद्यांगं ब्रह्मचर्यमित्यर्थः। मंदाधिकारिणोवगतिसाधनं संक्षिप्याह। संग्रहेणेति। यस्य यशब्दस्योच्चारणे यत्स्फुरति तत्तस्य वाच्यं। समाहितचित्तस्योंकारोच्चार णे यत्साक्षिसंवेदनं स्फुरति तदोंकारमवलंब्योंकारवाच्यं सत्त्वप्रधानमायावच्छिन्नमोंकारोपाधिकं ब्रह्माहमस्मीति ध्यायेदित्यर्थः। यदि तत्राप्यसमर्थस्तर्हि प्रणवे ब्रह्मदृष्टिं
अत कुर्यादित्याह। ओंशब्दप्रतीकं चेति। तत्त्वविचारानधिकृतानामोंकारोपासनां विधाय तत्फलं दर्शयन्नोंकारं स्तौतीत्याह। अत इति। यत ओंकारो ब्रह्मवाचको ब्रह्मप्रतीक इत्यर्थः। एतदक्षरमपरं ब्रह्मैवेत्यन्वयः। हि इदमेतदित्यर्थे एतदक्षरं परं ब्रह्मैव चकारः परापरात्मकत्वसमुच्चयार्थः। हि इत्यर्थं स्फुटयति। तयोर्हीति। हिशब्दो वाचकत्वसमुच्च

अथवाप्रतीकपदेनैववाचकत्वमुपलक्ष्यहिवेदांतेषुप्रणवस्यवाचकत्वप्रतीकत्वप्रसिध्यर्थौव्याख्येयःफलवचनंव्याचष्टे। एतदितिहिशब्दोभवतीत्यत्रान्वेति। एतदक्षरमु
पास्यपरमपरंब्रह्मेतिज्ञात्वोपास्ययोधिकारीयत्परमपरंवेच्छतितत्तद्भवतिहिइत्यर्थः। ननुपरापरोपासनयोस्तत्प्राप्तिःफलमित्युक्तंचेत्साम्यकृज्ज्ञानंव्यर्थमित्याशंक्योपासनाद्व्य
स्यफलविभागमाह। परंचेति। परंचेत्तदालंबत्वेनोपास्यंस्थितमितिवातदाज्ञातव्यंसाक्षात्प्राप्तव्यं। अपरंचेत्तदाप्राप्तव्यमेवेत्यध्याहारेणयोज्यं। अथवातदालंबनत्वेनस्थितंपरंचे
दिच्छतितदातज्ज्ञातव्यंभवत्यपरंचेत्तदालंबनत्वेनस्थितमिच्छतितदातत्प्राप्तव्यमेवभवतीत्यन्वयः। अतइतिपरापरप्राप्तिसाधनत्वादित्यर्थः। एवमुक्तप्रकारेणएतच्छ्रेष्ठमित्यन्वयः
केषांमध्यइत्यपेक्षायामाह। ब्रह्मेतिप्राप्त्यालंबनामितिगायत्र्यादिनांमध्येइत्यर्थः। परशब्दोऽपरस्याप्युपलक्षणार्थइत्याह। परंचेति। तत्रहेतुमाहपरापरेति। ब्रह्मैवलोकोब्र
ह्मलोकस्तस्मिन्महीयतेपूज्योभवतीत्यर्थमाह परस्मिन्नित्यादिनासाधनहीनायोपदेशोऽनर्थकइतिमत्वामंदमध्यमाधिकारभेदेनोत्कृष्टापकृष्टसाधनमभिधायांते॰
यत्स्वरूपंपृष्टंतदभिधानायोपक्रमतइतिआह। अन्यत्रधर्मादित्यादिनेति। परमार्थतःसर्वधर्मविनिर्मुक्तस्योपाधिमंतर्भाव्यमंदमध्यमंप्रतिआलंबनत्वेनप्रतीकत्वेनवोंकारो

परंचेतज्ज्ञातव्यंअपरंचेत्प्राप्तव्यंयतएवमतएवैतत्ब्रह्मप्राप्त्याऽऽलंबनानांश्रेष्ठंप्रशस्यतमंएतदालंबनंपरमपरंचपरापरब्रह्मविषयत्वात्। एतदालंबनंज्ञा
त्वाब्रह्मलोकेमहीयते। परस्मिन्ब्रह्मणिअपरस्मिंश्चब्रह्मभूतोब्रह्मवदुपास्योभवतीत्यर्थः॥ अन्यत्रधर्मादित्यादिनापृष्टस्यात्मनोऽशेषविशेषरहितस्या
लंबनत्वेनप्रतीकत्वेनचोंकारोनिर्दिष्टःपरस्यचब्रह्मणोमंदमध्यमप्रतिपत्तॄन्प्रति अथेदानींतस्योंकारालंबनस्यात्मनःसाक्षात्स्वरूपनिर्दिधार॰

एतद्ध्येवाक्षरंज्ञात्वायोयदिच्छतितस्यतत्। एतदालंबनंश्रेष्ठमेतदालंबनंपरं। एतदालंबनंज्ञात्वाब्रह्मलोकेमहीयते। नजायतेम्रियतेवा

यिषयेदमुच्यते। नजायतेनोत्पद्यतेम्रियतेवानम्रियतेच। उत्पत्तिमतोवस्तुनोऽनित्यस्यानेकविक्रियास्तासामाद्यंतेजन्मविनाशलक्षणेविक्रियेइ
हआत्मनिप्रतिषिध्येते। प्रथमंसर्वविक्रियाप्रतिषेधार्थंनजायतेम्रियतेवेतिविपश्चिन्मेधावी

निर्दिष्टइत्यर्थः। अपरस्यचब्रह्मणआलंबनत्वेनप्रतीकत्वेन॰
चोंकारोनिर्दिष्टइत्यन्वयः। अथसाधननिरूपणानंतरमिदानीमितिप्राप्तावसरत्वमुच्यते। तस्येत्युपासनार्थंसोपाधिकस्येत्यर्थः। ओंकारालंबनस्योंकारोपाधिकस्यात्मनइत्य
र्थः। साक्षादित्युपाध्यनंतर्भावेनेत्यर्थः। निर्धारयिषयानिर्धारयितुमिच्छयेदमुत्तरंननुयद्यन्यत्रधर्मादित्यादिनापृष्टस्योत्तरंतर्ह्यस्तित्वप्रश्नस्यकिमुत्तरंनचेदमेवेतिचेद्भिन्ना
त्मनोरेकोत्तरासंभवादितिचेन्नात्मभेदासिद्धेर्यदिपरमात्मनःसकाशाज्जीवोभिन्नस्तर्हिपरमात्मप्रश्नस्यनजायतइत्युत्तरंनस्याज्जन्मादिसंबंधस्यपरमात्मन्यप्रसंगा
त्तयोरैक्येजीवनाशप्रसक्तिमादायनिषेधउपपद्यतइतितयोरेकमेवोत्तरमितिभावः। नन्वन्येपिविकाराःसंतितेकिमितिप्रथमंननिषिध्यंतइतितत्राह। उत्पत्तिमतइ॰
त्यादिना। अनित्यस्यविनाशिनइत्यर्थः। विक्रियाःसंतीतिशेषः। समापद्यंतइतिपाठःकादाचित्कः। प्रथमंजन्मविनाशलक्षणेविक्रियेनजायतेम्रियतेवेतिइहात्मनि
प्रतिषिध्येतेइत्यन्वयः। प्रथमप्रतिषेधेप्रयोजनमाह। सर्वेति। क्रमेणेतिद्रष्टव्यंमेधावीत्यनेनगुणगुणिसंबंधेप्राप्तेप्रत्याह॥ ॥ ॥ ॥

अविपरिलुप्तेतिहेतुंपृच्छति।कुतइति।अथवादेवदत्तोजातोनष्टइतिप्रतीतेःकथंतत्प्रतिषेधइतिशंकतेकुतइति।नबभूवेत्यन्वयः।नबभूवेत्यत्रहेत्वंतरानुपादानात्स्वस्मादि
तिलभ्यतइतिआह।स्वस्माच्चात्मनइति।तत्रहेतुमाह।अर्थांतरेति।देहादिभ्योभिन्नइत्यर्थः।तथाचपूर्वोक्तप्रतीतेर्देहादिविषयकत्वान्नात्मनउत्पत्तिविनाशाविति फलि
तमाह।अजोनित्यइति।शाश्वतत्त्वंव्यतिरेकमुखेनोपपादयति।योहीति।अतएवेतिशाश्वतत्वादित्यर्थः।पुराणत्वमुपपादयति।योहीति।अभिनिर्वर्त्यतइतिनिष्पाद्यतइ
त्यर्थः।यतइतिएतेधर्माःशरीरस्यनात्मनोयस्मादतइत्यर्थः।ननुशरीरसंश्लिष्टगर्भवच्छरीरेहन्यमानेआत्मापिहन्यतइत्यतआह।तत्स्थोप्याकाशवदिति।यथाकाशः
शस्त्रघातादिभिर्नव्यथामश्नुतेःसंगस्वभावत्वादेवमात्माशरीरस्थोपिशस्त्रादिभिःशरीरेहन्यमानेनहिंस्यतइत्यर्थः।एवंभूतमित्यसंगस्वभावमित्यर्थः।शरीरमेवश
रीरमात्रंतस्मिन्नात्मत्वेनदृष्टिर्यस्यसतथोक्तः इच्छामभिनीयदर्शयतिहनिष्याम्येनमिति।मननंविज्ञानंतस्याकारंदर्शयति।हतोहमितीति।स्वमात्मानंनविजानीतः।शरी

अविपरिलुप्तचैतन्यस्वभावात्किंचनायमात्माकुतश्चित्कारणांतराद्बभूवस्वस्माच्चात्मनोनबभूवकश्चिदर्थांतरभूतः अतोयमात्माजोनित्यःशाश्वतः
अपक्षयपरहितःयोह्यशाश्वतःसोपक्षीयतेअयंतुशाश्वतःअतएवपुराणःपुरापिनवएवेतियोह्यवयवोपचयद्वारेणाभिनिर्वर्त्यतेसइदानींनवोयथाकुंभा
दिस्तद्विपरीतस्त्वात्मापुराणोवृद्धिविवर्जितइत्यर्थः यतएवमतोनहन्यतेनहिंस्यतेहन्यमानेशस्त्रादिभिःशरीरेतत्स्थोप्याकाशइवएवंभूतमप्यात्मानंश

विपश्चिन्नायंकुतश्चिन्नबभूवकश्चित् अजोनित्यःशाश्वतोयंपुराणोनहन्यतेहन्यमानेशरीरे॥ हंताचेन्मन्यतेहंतुंहतश्चे
न्मन्यतेहतं॥ उभौतौनविजानीतोनायंहंतिनहन्यते॥

रीरमात्रात्मदृष्टिर्हंताचेद्यदिमन्यतेचिंतयतिहंतुंहनिष्याम्येनमितियोप्यन्यो
हतःसोपिचेन्मन्यतेहतंआत्मानंहतोहमिति उभावपितौनविजानीतःस्वमात्मानंयतोनायंहंतिअविक्रियत्वादात्मनःतथानहन्यतेआकाशव
दविक्रियत्वादेवातोनात्मज्ञविषयएवधर्माःधर्मादिलक्षणःसंसारोनब्रह्मज्ञस्यश्रुतिप्रामाण्यान्न्यायाच्चधर्माधर्माद्यनुपपत्तेःकथंपुनरात्मानं

रमात्रदृष्टित्वादितिशेषः।तत्रहेतुमाह।यतइति।नहंतिहननरूपधर्मेणनसंयुज्यते।तत्रहेतुमाह।अविक्रियत्वादिति।तथाधर्मविषयत्वमप्यात्मनोनेत्याह।तथानहन्यतइ
ति।पूर्वोक्तहेतुमाह।अविक्रियत्वादितियद्यविक्रियएवात्मातर्हिधर्माद्यधिकार्यभावात्तदसिद्धेःसंसारोपलंभएवनस्यादित्याशंक्याह।अतोनात्मज्ञविषयइति।देहादौता
दात्म्याद्यभिमानिविषयइत्यर्थः।इतिनुकामयमानइत्यनात्मज्ञस्यसंसारमनुवदति।अथाकामयमानइत्यात्मज्ञस्यतदभावंदर्शयति।श्रुतिप्रामाण्यादिति।स्मृतिरपि।अ
थवर्णाश्रमाइत्याद्यासंसारमज्ञस्यानुवदति।स्थितप्रज्ञस्यकाभाषेत्याद्यातदभावंदर्शयति।यद्ज्ञानात्प्रवृत्तिर्यातज्ज्ञानात्साकुतोभवेदितिन्यायाच्चात्मज्ञस्यधर्मादि
र्नोपपद्यतेसमुक्तएवेत्याह।न्यायाच्चेति।तदुक्तंविवेकीसर्वदामुक्तःकुर्वतोनास्तिकर्तृताअलेपपक्षमाश्रित्यश्रीकृष्णार्जुनकौयथेति।कामवर्जितत्वादिसाधनविधानार्थमुत्तर
वाक्यमवतारयति।कथंपुनरिति।पृथिव्यादेर्महत्परिमाणादित्यन्वयः।नन्वेकस्याणुत्वंमहत्त्वंचकथंविरुद्धमनूद्यतेइत्याशंक्याणुत्वाद्यध्यासाधिष्ठानत्वादणुत्वादिव्यवहा

अणुमहदिति। नित्येनतेनैवेत्यन्वयः। आत्मवत्त्वस्वरूपवत्सप्रत्ययविषयइत्यर्थः। यस्मात्तदात्मनाएवआत्मवत्तद्विनिर्मोक्तोनभवतितस्मादित्यर्थः। सर्वात्मकत्वेसर्वाधिष्ठानत्वं हेतुमाह। सर्वेति। वस्तुशब्देनकर्मोच्यते। तेषामुपाधित्वादाश्रयत्वादित्यर्थः। तस्यसर्वाधिष्ठानत्वेनसर्वस्वरूपत्वंसहेतुकमाह। सचेति। हेतुमाह। गुहायामिति। आत्मभूतः प्रत्यक्त्वेनस्थितइत्यर्थः। प्रत्यग्ब्रह्मदर्शनसाधनंविदधातितमित्यादिना। तंपश्यतीत्यन्वयः। ननुदर्शनेकामराहित्यमात्रंनकारणमतआह। दर्शनेति। दर्शनोद्देशे नविहितं यच्छ्रवणंमननंविज्ञानंनिदिध्यासनंलिंगंसाधनंप्रतिबंधकनिरासहेतुरयस्यसतथातं दृष्टाऐहिकाअदृष्टाःआमुष्मिकाः विषयास्तेभ्यउपरतबुद्धिरित्यर्थः। कामराहित्यमिं-द्रियप्रसादेहेतुरित्याह। यदाचैवमिति। एवमुपरतबुद्धित्वंननुधातुशब्दःकथमिंद्रियवाचीशिरादिवाचित्वादित्याशंक्ययोगवृत्त्येत्याह। शरीरस्येति। धारणादिंद्रियैरिति शेषः। कर्मनिमित्तौवृद्धिक्षयौशरीरादेर्नात्मनः अतस्तद्रहितंअक्रतुर्धातुप्रसादात्तमात्मनोमहिमानंपश्यतीत्यन्वयः। दर्शनप्रकारमभिनीयदर्शयति। अयमहमस्मीति।

अणोःसूक्ष्मादणीयान्श्यामाकादेरणुतरोमहतोमहत्परिमाणान्महीयान्महत्तरःपृथिव्यादेः अणुमहद्वायदस्तिलोकेवस्तुतत्तेनैवात्मनानित्येनात्मवत्संभवतितदात्मनाविनिर्मुक्तंअसत्संपद्यते। तस्मादसावेवात्माअणोरणीयान्महतोमहीयान्सर्वनामरूपवस्तूपाधिकत्वात्सचात्मास्यजंतोःब्रह्मादिस्तंबपर्यंतस्यप्राणिजातस्यगुहायांहृदयेनिहितआत्मभूतःस्थितइत्यर्थः। तमात्मानंदर्शनश्रवणमननविज्ञानलिंगमक्रतुरकामोदृष्टादृष्टबाह्यवि-

अणोरणीयान्महतोमहीयानात्मास्यजंतोर्निहितोगुहायां तमक्रतुःपश्यतिवीतशोकोधातुप्रसादान्महिमानमात्मनः आसीनोदूरंव्रजति शयानोयातिसर्वतः। कस्तंमदामदंदेवंमदन्योज्ञातुमर्हति।

षयोपरतबुद्धिरित्यर्थः यदाचएवंतदामनआदीनिकरणानिधातवः शरीरस्यधारणात्प्रसीदंतीत्येषांधातूनांप्रसादादात्मनोमहिमानंकर्मनिमित्तवृद्धिक्षयरहितंपश्यत्ययमहमस्मीतिसाक्षाद्विजानाति ततोवीतशोकोभवति अन्यथादुर्विज्ञेयोयमात्माकामिभिःप्राकृतपुरुषैःयस्मादासीनोऽवस्थितोऽचलएवसन् दूरंव्रजतिशयानोयातिसर्वतएवमसावात्मादेवोमदामदः समदोऽमदश्चहर्षोऽहर्षश्चविरुद्धधर्मवानतोऽशक्यत्वात्ज्ञातुंकस्तंमदामदंदेवंमदन्योज्ञातुमर्हति॥ अस्मदादेरेवसूक्ष्मबुद्धेःपंडितस्यकस्यचित् विज्ञेयोयमात्मा ॥ ॥

दर्शनफलमाह। ततोवीतशोकइति। कामराहित्यमन्वयव्यतिरेकाभ्यांहेतुरित्याह। अन्यथेति। मोक्षकामिनोवारयति। प्राकृतेति। दुर्विज्ञेयत्वेविरुद्धधर्मवत्त्वेनप्रतिभासमानत्वं हेतुमाह। यस्मादिति। अचलएवसन्निति जाग्रत्स्वप्नयोर्मनआदिव्यापारसाक्षित्वेनकूटस्थःसन्स्थितएवेत्यर्थः। दूरंव्रजतीति। मनआदिव्यापारेषुविषयदेशंगच्छत्सुतत्प्रति बिंबरूपेणगच्छतीत्यर्थः। शयानइति करणेषूपरतेषुविशेषविज्ञानरूपाभावाच्छयानोयातीति सर्वतइतिविज्ञप्तिसामान्यरूपेणावस्थानात्सर्वतोयातीत्युच्यते। एवमसावि तिविरुद्धधर्मवानित्यर्थः। इतश्चविरुद्धधर्मवानित्याह। देवइति। अतोविरुद्धधर्मत्वादित्यर्थः। अतोज्ञातुमशक्यत्वात्तंमदन्यः कोज्ञातुमर्हतीत्यन्वयः। अधिकारिणोज्ञातुं शक्यइतितात्पर्यमाह। अस्मदादेरेवेति सूक्ष्मबुद्धित्वंअन्वयव्यतिरेककुशलत्वंपांडित्यंश्रवणादिपरत्वंकस्यचिदितिपुरुषधौरेयस्येत्यर्थः।

मनुष्याणां सहस्रेष्विति स्मृतेः। नन्वनेकधर्मवत्त्वाद्दुर्विज्ञेयश्चेदात्मा कथं पंडितस्यापि सुविज्ञेय इत्याशंक्याह स्थितिगतीति। यथा विश्वरूपो मणिर्नानारूपेणावभासते तथा परोपि
नानाविधोपाधिसन्निधानान्नानारूपो भासते न स्वतो नानारूपता चिंतामणिर्वा यद्यच्चिंत्यते तत्तच्चिंतोपाधिकमेवावभासते न तत्त्वतस्तथा स्थितिगतिनित्याऽनित्यादयो विरु
द्धानेकधर्मा येषां तदुपाधिकत्वादात्मापि विरुद्धधर्मवानिवावभासते इति योजना। तस्य सुविज्ञेयो भवतीत्यर्थः। यस्तु उपाध्यविवेकदर्शी स तु न जानातीत्याह। अतो दुर्विज्ञेयत्व
मिति। अत उपाध्यविवेकदर्शनादित्यर्थः। आत्मनो न स्वतो विरुद्धधर्मत्वं किंतूपाधितः इत्येतच्छ्रुतियोजनया दर्शयति करणानामिति। एकदेशविज्ञानस्येति। मनुष्योहमिदं पश्या
मीत्यादिपरिच्छिन्नविज्ञानस्येत्यर्थः। एवमित्युपरतविशेषविज्ञानमित्यर्थः। तदेति शेषः। केवलेति केवलं यत्सामान्यं सर्वोपाध्यनुस्यूतस्वरूपं विज्ञानं तत्स्वरूपत्वादात्मन इत्यर्थः।
केवलं विशेषोपाधिशून्यमित्यर्थः। इवशब्दान्न वस्तुतः इति भावः। यदेति स्वेन रूपेण प्रत्यङ्मात्रतया स्थित एव सन् विशेषविज्ञानस्यो यदा भवति तदेति पदद्वयमध्याहृत्य यो



स्थितिगतिनित्याऽनित्यादिविरुद्धानेकधर्मोपाधिकत्वाद्विरुद्धधर्मत्वाद्विश्वरूप इव चिंतामणिवदवभासते अतो दुर्ज्ञेयत्वं दर्शयति कस्तं मदन्यो ज्ञातुमर्ह
तीति करणानामुपशमः शयनं करणजनितस्यैकदेशविज्ञानस्योपशमः शयानस्य भवति। यदा चैवं केवलसामान्यविज्ञानत्वात्सर्वतो यातीव तदा विशेषवि
ज्ञानस्थः। स्वेन रूपेण स्थित एव सन्मन आदिगतिषु तदुपाधिकत्वाद्दूरं व्रजतीव सन्नेहैव वर्त्तते तद्विज्ञानाच्च शोकात्यय इत्यपि दर्शयति। अशरीरं स्वेन रूपे
णाकाशकल्प आत्मा तमशरीरं शरीरेषु देवपितृमनुष्यादिशरीरेष्वनवस्थेषु अवस्थितिरहितेषु अनित्येष्ववस्थितं नित्यमविकृतमित्येतत्। महांतं महत्त्व

अशरीरं शरीरेष्वनवस्थेष्ववस्थितं। महांतं विभुमात्मानं मत्वा धीरो न शोचति। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ॥

स्यापेक्षिकत्वशंकायामाह विभुं व्यापिनमात्मानमत्रात्मग्रहणं स्वतोऽनन्यत्वप्रदर्शनार्थं। आत्मशब्दः प्रत्यगात्मविषय एव मुख्यस्तमीदृशमात्मानं मत्वाऽ
यमहमिति धीरो धीमान्न शोचति। न ह्येवंविधस्यात्मविदः शोकोपपत्तिः यद्यपि दुर्विज्ञेयोऽयमात्मा तथाप्युपायेन सुविज्ञेय एवेत्याह। नायमात्मा प्रवचनेनाने
कवेदस्वीकरणेन लभ्यो ज्ञेयः नापि मेधया ग्रंथार्थधारणशक्त्या न बहुना श्रुतेन केवलेन केन तर्हि लभ्य इत्युच्यते।

जनीयं। तदुपाधित्वान्मन आदिगत्युपाधित्वात्
दूरं व्रजतीव न वस्तुत इत्यर्थः। इवशब्दार्थं स्फुटयति स चेति इहेति देहोक्तिः उत्तरवाक्यं व्याचिख्यासुर्भूमिकामारचयति। तद्विज्ञानादिति श्रीरामोऽतितरेणाजयतीति अभि
मानिकसशरीरत्वं व्यावर्तयति स्वेनेति। ननु शरीराणां स्थितिमत्त्वात्कथमनवस्थितत्वमत आह अनित्येष्विति। संश्लेषं वारयति नित्यमविकृतमिति स्वत इति न क्रियासाध्यं किं
तु स्वाभाविकं प्रत्यग्ब्रह्मैक्यमिति दर्शयितुमात्मशब्दः प्रत्यगात्मवाचको मुख्य इत्यर्थः। मत्वेत्यहमेव परं ब्रह्मेति साक्षात्कृत्येत्यर्थः। अन्वयव्यतिरेकसिद्धं विज्ञानफलमाह न
ह्येवमिति। ननूपायं विना पंडितस्य सुज्ञेयश्चेदनात्मज्ञस्यापि तथा स्यादित्याशंक्योपायं विना न पंडितस्यापि ज्ञेय इत्याह। यद्यपीति। दुर्विज्ञेयः पंडितस्यापीति शेषः। नज्ञेय इत्यन्व
यः। न बहुनेति आत्मप्रतिपादकोपनिषद्विचारातिरिक्तशास्त्रेण न लभ्य इत्यर्थः। केवलेनेति गुरूपदेशरहितेनेत्यर्थः। ईश्वराचार्यानुग्रहेणात्मा लभ्य इत्याकांक्षापूर्वकमाह येनेत्यादिना

क॰ साधकोधिकारीप्रार्थयते भजते श्रवणादिकालेपि प्रत्यकूब्रह्मैवाहमित्यनुसंधत्ते तेनैवात्मनातदनुग्रहेण संपरिज्ञात्पूर्वोक्तानुसंधानवताय थानुसंधानेस्वयं प्रत्यगात्मतयात्मापरमा
उ॰ त्मालभ्यइत्यर्थः। अथवाएषप्रकरणीपरमात्मांतर्यामिरूपेणाचार्यरूपेणवाव्यवस्थितोयमेवसाधकंवृणुते नुगृह्णातितेनपरमेश्वरानुग्रहलब्धप्रत्यग्ब्रह्मैक्यानुसंधानवतामुमु
भा॰ दी॰
१६ क्षुणालभ्यइत्यर्थः। पदार्थमुक्त्वावाक्यार्थमाह। एवमिति। तेनलभ्यतइतिवाक्यविवरणत्वेनउत्तरमवतारयति। कथमित्यादिना अधिकारिणः परमंतत्वमीश्वरानुग्रहात्प्रकाशत
इत्यर्थः। इतश्चेश्वरानुग्रहलब्धप्रसादवतानेकसाधनवताचज्ञातव्यआत्मेत्याह किंचान्यदिति। दुश्चरितंकायनिर्वर्त्यपापंअनुपरतःप्रज्ञानेनैनंमाप्नुयादितिसंबंधः। एवमुत्तरत्र
द्रष्टव्यंइंद्रियाणांलौल्यविषयप्रवणतातद्विपरितएवप्राप्नुयादित्याह यस्मितिविषयेभ्यइंद्रियसमाधानेपुण्यलोकःश्रूयतेतस्मादपिसमाहितचित्तइत्याह। समाहितेति। य

यमेवस्वात्मानंएषसाधकोवृणुते प्रार्थयतेतेनैवात्मनावरित्रास्वयमात्मालभ्योज्ञातव्यइत्येतत् निष्कामस्यात्मानमेवंप्रार्थयमानस्यआत्मनैवात्मालभ्य
इत्यर्थः। कथंलभ्यइत्युच्यते। तस्यात्मकामस्यैषआत्माविवृणुतेप्रकाशयतिपारमार्थिकींतनुंस्वांस्वकीयांस्वयाथात्म्यमित्यर्थः। किंचान्यन्नदुश्चरितात्
प्रतिषिद्धाच्छ्रुतिस्मृत्यविहितात्पापकर्मणोविरतोनुपरतोनापींद्रियलौल्यादशांतोनुपरतोनापिअसमाहितोनेकाग्रमनाविक्षिप्तचित्तःसमाहि
तचित्तोपिसन्समाधानफलार्थित्वान्नाप्यशांतमानसोव्यापृतचित्तःप्रज्ञानेनब्रह्मविज्ञानेनैनंप्रकृतमात्मानमाप्नुयात्। यस्तुदुश्चरिताद्विरतइंद्रियलौ

यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वां नाविरतोदुश्चरितान्नाशांतोनासमाहितः। नाशांतमानसोवापिप्रज्ञानेनैनमा
प्नुयात्। यस्यब्रह्मचक्षत्रंचोभेभवतओदनः। मृत्युर्यस्योपसेचनंकइत्थावेदयत्रसः॥ ॥इतिद्वितीयावल्ली॥
ल्याच्चसमाहितचित्तःसमाधानफ
लादप्युपशांतमानसश्चाचार्यवान्प्रज्ञानेनयथोक्तमात्मानंप्राप्नोतीत्यर्थः। यस्त्वनेवंभूतोयस्यात्मनोब्रह्मक्षत्रेसर्वधर्मविधारकेपिसर्वत्राणभूतेउभेओदन
अशनंभवतःस्यातांसर्वहरोपिमृत्युर्यस्योपसेचनमेवोदनस्याशनत्वेप्यपर्याप्तस्तंप्राकृतबुद्धिर्यथोक्तसाधनरहितःसन्कइत्थाइत्थमेवंयथोक्तसाधनवानि
वेत्यर्थः। वेदविजानातियत्रसआत्मेति॥ ॥इतिकठोपनिषद्द्वितीयावल्ली॥ ॥ऋतंपिबंतावित्यस्यावल्याःसंबंधोविद्याविद्येनानाविरुद्धफलेइत्युपन्यस्तेन
तुसफलेतेयथावन्निर्णीतेतन्निर्णयार्थरथरूपककल्पना
स्त्वनेवंभूतइतिउक्तसाधनसंपन्नोनभवतिसकथंवेदेतिसंबंधः यद्ब्रह्मसाधनवताविज्ञेयंतन्निर्दिशति। यस्येति।
सर्वधर्मविधारकत्वंसर्वत्राणेहेतुःसर्वत्राणभूतेअपीत्यन्वयः। अशनत्वेप्यपर्याप्तइत्यन्नत्वेप्यपर्याप्तःशाकस्थानीयइत्यर्थः। कइतिशब्दार्थमाह। प्राकृतबुद्धिरिति। इत्थाशब्दा
र्थमाह। एवमिति यत्रस्वमहिम्निसोन्तावर्ततेतथाभूतंकोवेदेत्यन्वयः॥ इतिश्रीकठवल्लीभाष्यविवरणेद्वितीयावल्लीस॰॥ ॥पूर्वोत्तरवल्लीनांसंबंधंदर्शयन्नुत्तरवल्याअगतार्थ
त्वमाह। ऋतमित्यादिनासंबंधइतिपूर्वाभ्यामभिधीयतइतिशेषः। नानाफलेइत्युक्तेपशुब्रह्मवर्चसादिवद्विरुद्धत्वंस्यात्तद्वारयति विरुद्धेइति इतिरुक्तपरामर्शी उपन्यस्ते
तिपूर्वयोर्वल्योरितिशेषः नत्विति। सफलेतिविद्याविद्येयथावत्स्वरूपतःसाधनतःफलतश्चन निर्णीतेइत्यर्थः। ननुतेएवनिर्णीतव्येकिमितिरथिरथ्यादिकल्पनेत्यतआह। तन्निर्ण

मृत्यु
रथि
सो
॥ टीका १६

यद्यपिस्वरूपतोनिरूप्येतेतथापिज्ञानेसौकर्यमित्याह। तथाचेति। ननुरूपकेणविद्याविद्येनिरूप्येकिमितिद्वावृतपानकर्त्तारावभिधीयेतेइत्यतआह। एवंचेति। रूपकेरथी
प्राप्ताप्राप्यंपदंगंताज्ञातागंतव्यंविष्णोःपदं। कस्यगंताकिंचपदंगंतव्यमितिविवेकार्थंद्वावात्मानावुपन्यस्येतेइत्यर्थः ननन्वात्मशब्दश्चेतनवाचीनचद्वौचेतनौप्रतीयेतेऋ
तपानकर्त्तृमात्रप्रतीतेस्तत्कथमात्मानावित्युच्येतेइतिचेन्नैकस्तावत्कर्मफलभोक्ताजीवश्चेतनःसिद्धोद्वितीयाऽन्वेषणायांसत्यांसंख्याश्रवणेऽस्यगोद्वितीयोन्वेष्टव्य
इत्युक्तेगौरेवद्वितीयोन्विष्यतेनाश्वोलोकेएवंचेतनएवद्वितीयोऋतपानकर्त्ताप्रतीयतइतिनात्मशब्देविरोधइतिभावः। अत्रऋतशब्दःसत्यवचनोपिगुणयोगात्कर्मफ
लवाचीत्याह। ऋतमित्यादिना। नन्वस्मिन्वाक्येजीवेश्वरावेवचेतनावुपन्यस्येतेनचद्वयोःकर्मफलसंबंधईश्वरस्यतदसंभवात्कथंपिबंताविस्यतआह। एकइति।
जीवइत्यर्थः। इतरईश्वरइत्यर्थः। कथंपिबंताविस्यतआह। तथापीति। पातृसंबंधादिति। पाताजीवस्तत्संबंधादित्यर्थः। छत्रिन्यायेनेतियथालोकेछत्रिणोगच्छंतीतिप्र

तथाचप्रतिपत्तिसौकर्यमेवंचप्राप्यप्राप्तृगंतृगंतव्यविवेकार्थंद्वावात्मानावुपन्यस्येते। ऋतंसत्यमवश्यंभावित्वात्कर्मफलंपिबंतौएकस्तत्र
कर्मफलंपिबतिभुंक्तेनेतरस्तथापिपातृसंबंधात्पिबंतावित्युच्यतेछत्रिन्यायेन (नहिकेवलस्यात्मनोभोक्तृत्वमस्तिबुद्ध्याद्युपाधिकृतमेव
भोक्तृत्वंएवंचसतिवक्ष्यमाणरथकल्पनयावैष्णवस्यास्पदस्यात्मतयाप्रतीतिरुपपद्यतेनान्यथा) सुकृतस्यस्वयंकृतस्यकर्मणऋतमितिपू

ॐ ऋतंपिबंतौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्द्धे। छायातपौब्रह्मविदोवदंतिपंचाग्नयोयेचत्रिणाचिकेताः। यःसेतुरीजाना
नामक्षरंब्रह्मयत्परं। अभयंतितीर्षतांपारंनाचिकेतंशकेमहि। } र्वेणसंबंधः। लोकेस्मिन्शरीरेगुहांगुहायांबुद्धौप्रविष्टौपरमेबाह्यपुरु
षाकाशसंस्थानापेक्षयापरमंपरस्यब्रह्मणोर्द्धंस्थानंपरार्द्धंतस्मिन्हिपरंब्रह्मोपलभ्यतेततस्तस्मिन्परमेपरार्द्धेहार्दाकाशेप्रविष्टावित्यर्थः। तौचछायातपाविव
विलक्षणौसंसारित्वासंसारित्वेन। ब्रह्मविदोवदंतिकथयंतिनकेवलमकर्मिणएववदंतिपंचाग्नयोगृहस्थायेचत्रिणाचिकेतास्त्रिःकृत्वोनाचिके
तोग्निश्चितोयैस्तेत्रिणाचिकेताः यःसेतुरिवसेतुरीजानानांयजमानानांकर्मिणांदुःखसंतरणार्थत्वान्नाचिकेतोग्निस्तंवयंज्ञातुं ॥ ॥ ॥

योगेसपरिवारेराज्ञिगच्छतिछत्र्यछत्रिसमुदायेछत्रिशब्दोवर्त्ततेएकसमूहवाहित्वेन। एवंपिबदपिबत्समुदायेपिबतिर्वर्त्ततइत्यर्थः। सुकृतस्यलोकेइत्यन्वयभ्रमंवारयति
। ऋतमितीति। बाह्यपुरुषाकाशस्थानंदेहाश्रयआकाशप्रदेशःस्थानमित्यनंतरमर्हतीतिद्रष्टव्यं। परार्द्धइति। क्वाचित्कःश्रुतिपाठस्तस्मिन्पक्षेसुगमं। परार्द्धत्वमुपपादयति
। तस्मिन्निति। अतइतियतःपरब्रह्मोपलब्धिस्थानमतइत्यर्थः। गार्हपत्योदक्षिणाग्निराहवनीयःसभ्यआवसथ्यश्चेतेपंचाग्नयोयेषांतेपंचाग्नयःद्युपर्जन्यपृथिवीपुरुष
योषित्सुयेऽग्निदृष्टिंकुर्वंतितेवापंचाग्नयःपंचाग्नयस्त्रिणाचिकेतलक्षणावदंतीतिसंबंधः ननुनसंत्येवब्रह्मविदःपंचाग्निविदश्चानुपलंभादित्याशंक्यपूर्वंविद्वद्नुभवविरो
धमाह। यःसेतुरितिकर्मिणामितिकर्मानुष्ठानवतामित्यर्थः॥ विराट्रूपाग्नेःसेतुत्वंव्युत्पादयति। दुःखेतिदुःखस्यसंतरणंनिवृत्तिःसैवार्थःप्रयोजनंयस्यतस्यभावस्तत्त्वंतस्मा
दित्यर्थः

त

नाचिकेतोग्निरुक्तहेतोः सेतुरिव सेतुर्यं इति पूर्वेण संबंधः तं नाचिकेतोग्निं न केवलं ज्ञातुं किंतु कर्तुमपीत्याह। चेतुमिति। संकोचकप्रमाणाभावात् सर्वभयातीतमित्याह। संसार॰ पारमिति। संसारातीतमित्यर्थः। ततुं मिच्छतां प्राप्तुमिच्छतामाश्रयमवलंबनं न क्षरतीत्यक्षरं षड्भावविकारशून्यं न परोक्षं किंतु प्रत्यक्भूतमित्यर्थः। चकारात् परब्रह्मा॰ त्मकाग्निं ज्ञातुं चेतुं परब्रह्म ज्ञातुमेव शक्नुवं तेइत्येतत्समुच्चयो वगम्यते। ननु यद्यपि पूर्वेषां ब्रह्मवित्त्वं संभवति महामहिमत्वात्तथापि नाधुनिकानामल्पप्रज्ञानामित्याशंक्य प्रमातृमात्रस्य चेतनत्वेन ज्ञातृत्वशक्तियोग्यते श्वरानुग्रहादिना संभवतीत्यभिप्रेत्य नात्पर्यमाह। परापरेति। कर्मविदाश्रयोः परंब्रह्मविदः श्रयः परंब्रह्मेति विभागः। ननु न॰ ऋतपानकर्त्रोर्ब्रह्मवित्त्वसिद्धत्वमन्ययोरेवेत्याशंक्याह। एतयोरिति। कर्मब्रह्मविदाश्रययोः परापरब्रह्मणोर्ऋतं पिबंतावित्यत्रोपन्यासो हि यस्मात्कृतस्तस्मान्नान्य॰ त्वाशंकेत्यर्थः। रथरूपवाक्यमवतारयति। तत्रेति। जीवात्मपरमात्मनोर्मध्ये उपाधिकृतउपाधिपरिच्छिन्न इत्यर्थः ईश्वरं व्यावर्त्तयति संसारीति। मुक्तजीवं व्यावर्त्तयति वि॰ द्येत्यादिना। साक्षात्कारकर्मणोरित्यर्थः। कस्मै प्रयोजनायेत्याकांक्षायामाह। मोक्षेति विद्यायामधिकृतो मोक्षगमनाया विद्यायामधिकृतः संसारगमनायेति विभागः तस्ये

चेतुं च शकेमहि शक्नुवंतः किंच यत्त्वाभयं भयशून्यं संसारपारं तितीर्षतां ततुंमिच्छतां ब्रह्मविदां यत्परमाश्रयं अक्षरं आत्माख्यं ब्रह्म तच्च ज्ञातुं श केमहि शक्नुवंतः परापरे ब्रह्मणी कर्मब्रह्मविदाश्रये वेदितव्ये इति वाक्यार्थः एतयोरेव ह्युपन्यासः कृतः ऋतं पिबंताविति तत्र य उपाधिकृतः संसारी॰ विद्याविद्ययोरधिकृतो मोक्षगमनाय संसारगमनाय च तस्य तदुभयगमने साधनो रथः कल्प्यते तत्र तमात्मानमृतपं संसारिणं रथिनं रथस्वा

आत्मानं रथिनं विद्धि शरीरं रथमेव तु॥ बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥

मिनं विद्धि जानीहि शरीरं रथमेव तु रथबद्ध यस्थानीयैरिन्द्रियैराकृष्यमाणत्वाच्छरीरस्य बुद्धिं त्वध्यवसायलक्षणां सारथिं विद्धि बुद्धिनेतृप्रधानत्वाच्छरीरस्य सारथिनेतृप्रधान इव रथः सर्वं हि देहगतं कार्यं बुद्धिकर्त्तव्यमेव प्रायेण। मनः संकल्पविकल्पादिलक्षणं प्रग्रहं रशनां विद्धि॥ ॥३॥

तिविद्याविद्ययोरधिकृतस्य तदुभयगमनसाधनः। संसारमोक्षगमनसाधनः रथगमनागमनजन्यफलभोक्तृस्वामिसाम्यं विवक्षित्वात्तमाह। तमिति। शुद्धचैतन्यं व्या वर्त्तयति। ऋतपमिति। ईश्वरं व्यावर्त्तयति। संसारिणमिति। रथस्वामिनमिति रथतादात्म्याभिमानिनमित्यर्थः शरीरस्य रथत्वसाम्ये हेतुमाह रथवदिति अंतःकरण स्यैक्ये पि वृत्तिभेदेन भेदं विवक्षित्वा सारथिप्रग्रहकल्पनेत्याह। बुद्धिं त्विति। अध्यवसायलक्षणां अध्यवसायो निश्चयो लक्षणं स्वरूपं यस्याः सा तामित्यर्थः पूर्ववत्सा॰ म्ये हेतुमाह। बुद्धीति। बुद्धिर्नेता प्रापयित्री प्रधानं स्वतंत्रभूता यस्य शरीरस्य तत्तथा तस्य भावस्तत्त्वं तस्मादित्यर्थः। तत्र दृष्टांतमाह। सारथिनेतृप्रधान इव रथ इति। सारथि र्नेता प्रापयिता प्रधानः स्वतंत्रो यस्य स इवेत्यर्थः। ननु मन आदिन्यपि शरीरनेतृणि तत्कथं बुद्धेरेव नेतृत्वेन सारथित्वमत आह। सर्वं हीति। देहगतं सर्वं कार्यं गमनागम नादि प्रायेण बुध्या कर्त्तव्यं हि यस्मात्तस्मात्प्रायिका भिप्रायेण बुद्धेरेव नेतृत्वात्सारथित्वं युक्तमित्यर्थः सारथिहस्ते विद्यमानं हयाकर्षणसूत्रं प्रग्रहशब्दितं मन इत्याह॥

मनइति। संकल्पइदमेवकरिष्येइतिवृत्तिरादिशब्देनविकल्पोगृह्यतेस्थाणुर्वापुरुषोवेत्यादिस्तत्स्वरूपमित्यर्थः तस्यरशनात्वंप्रसिद्धरशनासाम्येनोपपादयति। मनसे
त्यादिना। प्रगृहीतान्याकृष्टानिरशनयेति। यथासूत्रेणाश्वाआकृष्यंतेतद्वदित्यर्थः॥ प्रगृहवत्सारथिस्वाम्याधिष्ठितरथाकर्षकहयतुल्यानींद्रियाणीत्याह। इन्द्रियाणीति
।कइत्याकांक्षायामाह रथेति रथत्वेनशरीरंकल्पयंतिनिरूपयंतिये ऽध्यात्मविदस्तइत्यर्थः। पूर्ववत्साम्येहेतुमाह। शरीरेति।आकर्षणंहयधर्मस्तत्साम्यादित्यर्थः यथाभद्रसे
नस्यराज्ञोरथिनोरथहयगंतव्यमार्गाः कुरवएवमिन्द्रियहयगंतव्यविषयादृत्याह। तेष्विति। तच्छब्दंव्याचष्टे। इन्द्रियेष्वित्यादिना। आदिशब्देनस्पर्शशब्दरसगंधागृह्यंतेर
थस्वामित्वेनयआत्माकल्पितस्तस्यभोक्तृत्वंचनस्वाभाविकमित्याह॥आत्मेन्द्रियमनोयुक्तमिति॥ औपाधिकभोक्तृत्वेऽन्वयव्यतिरेकौशास्त्रंचप्रमाणमित्याह। नहिकेवलस्येति
उपाध्यपरिछिन्नस्येत्यर्थः। शास्त्रमुदाहरति। तथाचेति। ध्यायतीवलेलायतीवेत्यादिश्रुत्यंतरमुपाध्यनवछिन्नस्यासंसारित्वमेवदर्शयतिनसंसारित्वमित्यर्थः वैष्णवपद

मनसाहिप्रगृहीतानिश्रोत्रादीनिकरणानिप्रवर्त्तंतेरशनयेवाश्वाः इंद्रियाणिचक्षुरादीनिहयानाहुः रथकल्पनाकुशलाः शरीररथाकर्षणसामान्या
तेष्विंद्रियेषुहयत्वेनपरिकल्पितेषुगोचरान्मार्गान्रूपादीन्विषयान्विद्धि।आत्मेंद्रियमनोयुक्तंशरीरेंद्रियमनोभिःसहितंसंयुक्तंआत्मानंभोक्तेतिसंसा
रीत्याहुर्मनीषिणोविवेकिनः। नहिकेवलस्यात्मनोभोक्तृत्वमस्तिबुद्ध्याद्युपाधिकृतमेवतस्यभोक्तृत्वं। तथाचश्रुत्यंतरंकेवलस्याभोक्तृत्वमेवदर्शयति।

इन्द्रियाणिहयानाहुर्विषयाꣳस्तेषुगोचरान्। आत्मेन्द्रियमनो ॥ ॥
युक्तंभोक्तेत्याहुर्मनीषिणः। यस्त्वविज्ञानवान्भवत्ययुक्तेनमनसासदा।

ध्यायतीवलेलायतीवेत्यादि। एवंचसति। वक्ष्यमाणरथकल्पनयावैष्णवस्यपदस्यात्मतयाप्रतिपत्तिरुपपद्यतेनान्यथा। स्वभावानतिक्रमात्तथैवं
सतियस्तु बुध्याख्यःसारथिरविज्ञानवाननिपुणोऽविवेकीप्रवृत्तौनिवृत्तौचभवति॥

प्राप्तिश्श्रुत्यनुपपत्त्यापिनस्वाभाविकसंसारित्वमित्याह॥ एवंचसतीति॥ औपाधिकेभोक्तृत्वेसतीत्यर्थः॥ वक्ष्यमाणयारथकल्पनाविज्ञानसारथिर्यस्त्वित्यादिनातयावैष्ण
वस्यपदस्यव्यापकस्वरूपस्यात्मतयाऽत्यगभिन्नत्वेनप्रतिपत्तिःप्राप्तिरवस्थानमुपपद्यतइत्यर्थः। नान्यथेत्यन्यथासंसारित्वस्यव्यापकस्वरूपत्वस्यात्मतयास्वाभा
विकत्वेनप्रतिपत्तिर्नोपपद्यतइत्यन्वयः। तत्रहेतुमाह। स्वभावानतिक्रमादिति। स्वभावस्यपारमार्थिकस्यसंसारित्वस्यानतिक्रमादतिक्रमाभावात्त्यागाभावादसंसारि
वैष्णवपदप्राप्तिर्नेत्यर्थः॥ पूर्वोक्तान्वयव्यतिरेकाउपसंहरति॥ तत्रेति तत्रसंसारित्वस्यास्वाभाविकत्वेएवमुक्तप्रकारेण॥ यस्त्विति॥ यथायेनप्रकारेणेतरःसारथिःर
थगमनेप्रग्रहेणायुक्तस्तथाऽसमाहितेनप्रग्रहस्थानीयेनमनसायुक्तोयस्तुकर्त्तव्याकर्त्तव्ययोरनिपुणोभवतीत्यर्थः॥ अविज्ञानवत्त्वेनचाविज्ञानसामान्याभावः ॥
किंतुबुद्धिगतातिशयाभावः॥ सोप्यविवेकरूपइत्यर्थः॥

न१

क॰ उ॰ १८

अबुद्धिसारथेरविवेकसारथेरशक्यनिवारणीयानीतिविषयेभ्य इति शेषः इतरसारथेर्लौकिकस्यादांताश्वाः कुमार्गाद्यथा निवर्तयितुं न शक्यं तेतथा बुद्धिसारथेरसमाहितानींद्रिया ण्यशक्यनिवारणानि भवंतीत्यन्वयः॥ पूर्वोक्तविपरीत इति अविवेकसारथेर्भिन्न इत्यर्थः। मनोनियतौ हेतुमाह। समाहितेति विषयस्मरणवच्चित्त निग्रहे विषयविकल्पात्मकं मनो निगृहीतं भवतीति भावः। शक्यानि कर्तव्याकर्तव्ययोरिति शेषः। सत्पदस्यार्थमाह। दांता इति लौकिकसारथिशिक्षिताश्वा इव समाहितचित्ततया प्रगृहीतमनसः शक्यानींद्रिया णि कर्तव्याकर्तव्ययोर्निगृहीतुमित्यर्थः। अविवेकबुद्धेरनियतेंद्रियस्य फलपरत्वेनोत्तरं वाक्यमवतारयति। तस्येत्यादिना मनोनिग्रहाभावे विवेकित्वादिंद्रियपारवश्येन पाप्मोपच ये दूषितांतःकरणोऽशुचिरित्याह। तत एवेति। कार्यब्रह्मव्यावृत्त्यर्थमाह। परमिति। ननु चेतनस्य बंधो यस्य बंधस्तस्य मोक्षो बुद्धेश्च बंधाभावाद्यत्परंपदं तदक्षरारव्यं सारथिर्नाप्नो॰

यश्चेतरो रथचर्यायामयुक्तेनाप्रगृहीतेन असमाहितेन मनसा प्रग्रहस्थानीयेन सदायुक्तो भवति तस्याकुशलस्य बुद्धिसारथेरिंद्रियाण्यश्वस्थानीयानि अव श्यानि अशक्यान्यनिवारणीयानि दुष्टाश्वा अदांता इवेतरसारथेर्भवंति। यस्तु पुनः पूर्वोक्तविपरीतः सारथिर्भवति विज्ञानवान् प्रगृहीतमनाः समाहितचित्तः सदा तस्याश्वस्थानीयानींद्रियाणि प्रवर्तयितुं निवर्तयितुं वा शक्यानि वश्यानि दांताः सदश्वा इवेतरसारथेः। तस्य पूर्वोक्तस्याविज्ञानवतो बुद्धिसारथेरिदं फ लमाह। यस्त्वविज्ञानवान् भवत्यमनस्कः अप्रगृहीतमनस्कः स तत एवाशुचिः सदैव न स रथी तत्पूर्वोक्तमक्षरं यत्परं पदं प्राप्नोति तेन सारथिना न कैवल्यं

=कैवल्यं

तस्येंद्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥ यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा। तस्येंद्रियाणि वश्यानि सदश्वा इव सारथेः॥ यस्त्वविज्ञा नवान् भवत्यमनस्कः सदाऽशुचिः। न स तत्पदमाप्नोति संसारं चाधिगच्छति॥ यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः। स तु तत्पदमाप्नो ति यस्माद्भूयो न जायते॥ विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्॥ ॥ ॥

प्नोति संसारं च जन्ममरणलक्षणमधिगच्छति। यस्तु द्वितीयो विज्ञानवान् विज्ञानवत्सारथ्युपेतो रथी विद्वानित्येतद्युक्तमनाः समनस्कः स तत एव सदाशु चिः स तु तत्पदमाप्नोति यस्मादात्मपदाद प्रच्युतः सन् भूयः पुनर्न जायते संसारे किं तत्पदमित्याह। विज्ञानसारथिर्यस्तु यो विवेकसारथिः पूर्वोक्तो मनः प्रग्रहवान् प्रगृहीतमनाः समाहितचित्तः सन् शुचिर्नरो विद्वान्। सोऽध्वनः संसारगतेः पारं पारमिवाधिगंतव्यमित्येतत् आप्नोति ॥ ॥ ॥

तीति कथमुच्यते तत्राह। तेनेति। चेतन इति शेषः। कैवल्यं राजपुरप्रवेशस्थानीयमित्यर्थः। जन्ममरणादिलक्षणं कंटकपाषाणाद्युपप्लुतदेशतुल्यं। तद्विपरीतस्य पदप्राप्तिरित्याह। यस्त्विति। कर्तव्याकर्तव्यविवेको विज्ञानं तद्वान्यः सारथिर्बुद्धिरूपस्तेनोपेत इत्यर्थः। विद्वानिति। क्रमेणेति शेषः। तत एव निगृहीतमनस्कत्वादेव सदाशुचिरिति स्वच्छांतःकरण इत्य र्थः। तच्च पदं नसातिशयमित्याह। यस्मादिति। तत्र हेतुत्वेन पदस्वरूपमाकांक्षापूर्वकं दर्शयति किमित्यादिना। निगृहीतमनास्तत्त्वंपदार्थविवेकवानात्मनि समाहितचित्तः सन्निद ध्यासनवांस्तेन गतप्रतिबंधः शुचिर्नरो विद्वान् प्रतिबंधेन साक्षात्कारवान् यः सोऽध्वनः संसारांतर्भूतदेवयानदक्षिणायनाधोगतिरूपाया गतेः पारं तद्प्राप्यं तदाप्नोतीत्यर्थः॥

श्वा प्र स बुद्धि राम॰ १८

नन्वात्मस्वरूपस्य नित्याप्तत्वादाप्नोतीति कथं तत्राह॥ मुच्यत इति। प्रत्यगितरयोरावरकाज्ञाननिवृत्त्या वाप्नोतीत्यौपचारिकमिति भावः। आकाशं व्यावर्तयति। ब्रह्मण इति हिरण्यगर्भं व्यावर्त्तयति। वासुदेवाख्यस्येति वासुदेव इत्याख्या यस्य सः वासयति भूतानि स्वस्मिन्निति वासुः स चासौ देवश्च दीव्यत इति स्वप्रकाशः स वासुदेव इत्यर्थः। अनेन तत्पदवाच्यमभिहितं तस्य लक्ष्यमाह। परममिति। अथवा षष्ठी राहोः शिर इतिवदौपचारिकी व्यापकं प्रकृष्टं पदमित्यर्थः सतत्वं स्वरूपं ननु तत्पदलक्ष्यस्य विष्णोः प्रकृष्टं पदमाप्तव्यमित्युक्तं तत्किं केनचिन्मार्गेण देशविशेषे गंतव्यं तदपि भिन्नतया ग्राम्याधिगमनवज्ज्ञातव्यं तथात्वे मोक्षस्यानित्यत्वापत्तिस्तस्य प्रकृष्टत्वं च कथमित्याशंक्याह। अधुनेत्यादिना। असावधिकारी यदाप्नोतीत्येतद्व्याचष्टे पत्पदमिति। तस्य पदस्याधिगमः कर्तव्य इत्यन्वयः। कथं प्रकृष्टत्वमित्यस्योत्तरमाह॥ इन्द्रियाणीति। सूक्ष्मेति। विषयमनोबुध्यादिक्रमेणेत्यर्थः। तत्किं केनचिन्मार्गेण देशविशेषे भिन्नतया प्राप्तव्यं तथा चानित्यत्वापत्तिः स्वर्गादिवदित्यस्योत्तरमाह। प्रत्यगात्मतयेति। नदेशपरिच्छिन्नं फलं किंतु मोह व्यवहितं तदपगमे प्रत्यक्रूपेणावस्थानमितितद्रूपेण साक्षात्कारः संपद्यते इत्येवमर्थमुत्तरो ग्रंथ आरभ्यत इत्यर्थः। तावच्छब्दः क्रमेणोत्तरोत्तरापेक्षया पूर्वपूर्वस्य स्थूलत्वज्ञापनपरः। इंद्रियेभ्योर्थपरत्वे कारणत्वसंभावितहे

मुच्यते सर्वसंसारबंधनैस्तद्विष्णोर्व्यापनशीलस्य ब्रह्मणः परमात्मनो वासुदेवाख्यस्य परमं प्रकृष्टं पदं स्थानं सतत्त्वमित्येतत्तद्यदसावाप्नोति विद्वान् अधुना यत्पदं गंतव्यं तस्येंद्रियाणि स्थूलान्यारभ्य सूक्ष्मतारतम्यक्रमेण प्रत्यगात्मतयाधिगमः कर्त्तव्य इत्येवमर्थमिदमारभ्यते। स्थूलानि तावदिंद्रियाणि तानि यैरर्थैः आत्मप्रकाशनायारब्धानि तेभ्य इंद्रियेभ्यः स्वकार्येभ्यः ते पराह्यर्थाः सूक्ष्मा महांतश्च प्रत्यगात्मभूताश्च तेभ्योप्यर्थेभ्यः परं सूक्ष्मतरं महत्तमहदादिपदं सर्वं

इन्द्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिः॥

त्र्यव्यापकत्वेन ज्ञेयमत्र प्रत्यगात्मभूतं च मनः मनःशब्दवाच्यं मनस आरंभकं भूतसूक्ष्मं संकल्पविकल्पाद्यारंभकत्वात्। मनसोपि परा सूक्ष्मतरा महत्तरा प्रत्यगात्मभूता च बुद्धिः बुद्धिशब्दवाच्यमध्यवसायाद्यारंभकं भूतसूक्ष्मं॥ ९ तुमाह। यैरिति। आत्मप्रकाशनाय विषयज्ञानाय यैरर्थैरारब्धानि तानीन्द्रियाणि तेऽर्थाः परादित्यन्वयः केभ्य इत्याकांक्षायां विषयकार्यभूतप्रकृतेन्द्रियेभ्य इत्याह। तेभ्य इति त्रिधा परशब्दार्थं हि शब्दद्योतितमाह। सूक्ष्मा इत्यादिना इंद्रियानुस्यूतत्वात्ततः सूक्ष्माः महान्तश्च व्यापकाः अत्र परस्परसमुच्चितं परत्वं विवक्षितमिति च शब्दद्वयं। ननु विषयाणामनात्मत्वात्प्रत्यगात्मभूताश्चेति कथमिति चेद्यथा प्रत्यगवस्थानपायिन्येवं विषयादिन्द्रियेष्वनपायिन इति प्रत्यगात्मभूता इत्युच्यन्ते इति भावः। तेभ्योपीतीन्द्रियेभ्यः परत्वेनोक्तेभ्योपीत्यर्थः ननु देहपरिच्छिन्नस्य मनसोनव्यापकत्वादि विषयान्प्रति सूक्ष्मत्वादिकमुपपद्यतेऽकारणत्वात्कारणस्य हि कार्यापेक्षयोक्तत्रितयरूपत्वं यथेन्द्रियापेक्षया विषयाणां तथा च मनसः कथं सूक्ष्मत्वादिकमित्याशंक्य मनस आरंभकं भूतसूक्ष्मं मनःशब्दवाच्यमेकदेशेन मनोरूपेण परिणामि विषयान्प्रति भूताकारेण कारणमतो मनसः परत्वं विषयेभ्यो युज्यत इत्याह मनःशब्दवाच्यमित्यादिना। बुद्धेर्मनसः सकाशात्परत्वे हेतुं वदन्वाक्यमवतारयति संकल्पेति तादृशस्य मनसोध्यवसायनियम्यत्वात्ततः परा बुद्धिरित्याह। मनसोपीति। अर्थेभ्यः परादपीत्यपेरर्थः। ॥ ॥

क. उ. १९

मनःकारणत्वाभावाद्बुद्धेःकथंपरत्वमित्याशंक्यपरशब्दार्थकथनपूर्वकंबुद्धिशब्दार्थमाह॥ सूक्ष्मेत्यादिना। आदिशब्देनबुद्धिवृत्त्यवांतरविशेषागृह्यंते। ननुमनसआरंभकभूत
सूक्ष्मंप्रतिकथंबुध्यारंभकभूतसूक्ष्मस्यकारणतामानाभावाद्भेदाभावाच्चविज्ञानशक्तिमदंतःकरणस्यापंचीकृतभूतसूक्ष्मसात्विकांशसमष्टितोविशेषेणजन्मांगीकारात्तदा
रंभकाणामैकात्म्येनभेदाभावादितिचेत्नभूतसूक्ष्मशब्देनापंचीकृतानांग्रहःकिंतुपंचीकृतान्नरूपभूतसूक्ष्माणामिहग्रहणंतेषामन्नमशितमित्यादिनाणिष्ठभागस्यप्रसिद्धे
स्तस्यमनःशब्दवाच्यांतःकरणोपचयहेतुत्वेनोपचितांतःकरणकारणत्वादंतःकरणस्यचनिश्चयसंकल्पशक्तिद्वयशालित्वेननिश्चयशक्तिमत्त्वात्साध्यत्वादितरस्यतदा
रंभकभूतसूक्ष्मयोःकार्यकारणभावसंभवान्मनःशब्दवाच्याणिष्ठभागस्यकारणत्वसंभवात्परत्वमुपपद्यतेतर्हिबुद्धिमनसोरेवग्रहेसंभवतिभूतसूक्ष्मपर्यंतधावनंकिमर्थमि
तिचेत्तद्ग्रहस्यतदारंभकभूतसूक्ष्माधीनत्वात्तावत्पर्यंतधावनमितिभावः अथवानन्वर्थेभ्योमनसआरंभकंभूतसूक्ष्मंपरंतस्माद्बुध्यारंभकंभूतसूक्ष्मंपरमितिनयुक्तंकार्यापेक्ष
याहिकारणमपचितावयवंव्यापकमनपायस्वरूपंपरंप्रसिद्धंयथाघटादेर्मृदादिः। नचेहभूतसूक्ष्माणांपरस्परकारणभावेमानमस्ति। सत्यं तथापिविषयेंद्रियव्यवहारस्य
मनोधीनत्वात्ततोमनोव्यापकंकल्प्यतेऽस्मिन्प्रकरणेयद्यदधीनंतत्तस्यापरमितरत्परमितिहिस्थितेः। ननुभाष्येमनःशब्दवाच्यंभूतसूक्ष्मंपरमितिकथमुक्तमितिचेत्केषांचिन्म

बुद्धेरात्मासर्वप्राणिबुद्धीनांप्रत्यगात्मभूतत्वादात्मामहान्सर्वमहत्वादव्यक्ताद्यत्प्रथमंजातंहैरण्यगर्भंतत्त्वंबोधाबोधात्मकंमहा

बुद्धेरात्मामहान्परः॥ महतःपरमव्यक्तं॥

नात्माबुद्धेःपरइत्युच्यते। महतोपिपरंसूक्ष्मतरंप्रत्यगात्मभूतंसर्वमहत्तरंचाव्यक्तंसर्वजगतोबीजभूतं॥ ॥ ॥ ॥

नआत्मेतिभ्रमस्तन्निरासायमनसोभौतिकत्वेनानात्मत्वंवक्तुंभूतसूक्ष्ममित्युक्तमेवंबुद्धिस्थलेपिद्रष्टव्यं। तस्यमनसोध्यवसायनियम्यत्वाद्बुद्धिःपराभूतोपचयापचया॰
भ्यांमनसोभौतिकत्वेनअनात्मत्वंबुद्धेःकरणत्वेनानात्मत्वंद्रष्टव्यं। ततोर्थादिषुभूतसंस्थानेष्वेवपरत्वंकल्प्यतेपरमपुरुषार्थंदिदर्शयिषयानत्वर्थादीनांपरत्वंप्रतिपि
पादयिषितंप्रयोजनाभावाद्वाक्यभेदप्रसंगाच्चेत्यपिद्रष्टव्यं। आत्मशब्दस्यपरशब्दार्थव्यापकत्वांशेनपौनरुक्त्यमाशंक्यअपुनरुक्तमर्थमाह। सर्वेति। सुरनरतिर्य॰
गादिबुद्धीनांविधारकत्वात्सातत्यगमनादात्मोच्यतइत्यर्थः। आत्ममहच्छब्दयोःपौनरुक्त्येसर्वबुद्धिव्यापकतात्मशब्दार्थः। बुद्धितदितरव्यापकतामहच्छब्दार्थइत्या
ह। सर्वेति। तत्रहेतुमाह। अव्यक्तादितिहैरण्यगर्भंतत्त्वमितिसूत्रसंज्ञितमित्यर्थः। बोधाबोधात्मकंज्ञानक्रियाशक्त्यात्मकमित्यर्थः। परमव्यक्तमित्यन्वयःहिरण्यगर्भ
तत्त्वमेवसूक्ष्ममतिशयेनसूक्ष्मंसूक्ष्मतरंअव्यक्तंप्रत्यग्वदनपायिसर्वस्मात्व्यापकमित्यर्थः हिरण्यगर्भाद्वैलक्षण्यमाह। सर्वेति। आरंभवादंनिराकरोति। अव्याकृतेति॥
अव्याकृतयोर्नामरूपयोःसतत्त्वंस्वरूपमित्यर्थः। ननुसृष्टेःप्रागव्याकृतव्यतिरेकेणाभावात्कथंसर्वेषांकार्याणांकारणानांचशक्तिसमुदायरूपमव्यक्तमितिचेत्प्रलयेसर्वशक्तीना
मवस्थानंवक्तव्यंशब्दार्थसंबंधस्यशक्तिलक्षणस्यनिर्वाहायतासांचशक्तीनांमायातत्त्वेसमाहारोभवति। ब्रह्मणःसंगत्वादितिसमाहाररूपमव्यक्तमित्यर्थः॥ ॥ ॥

राम. १९

तत्रप्रमाणमाह।अव्याकृतेति। तद्धेदं तर्ह्यव्याकृतमासीदेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च मायां तु प्रकृतिं विद्यादित्यादिश्रुतिप्रसिद्धमित्यर्थः सांख्याभिमतप्रधाना द्वैलक्षण्यमाह॥ परमात्मनीति। ननु शक्तिरेकात्मा चैक इति सद्वितीयत्वापत्तिरित्याशंक्यात्मव्यतिरेकेण तस्या असत्त्वं दृष्टान्तेनाह। वटेति। वटबीज इत्यर्थः।पदर्थे पूर्वपूर्वापेक्षयोत्तरोत्त रस्य परत्वं प्रतिपादितं द्वैष्णवपदमवतारयति। तस्मादित्यादिना। पूर्वोक्तात्। नन्वात्मनः सूक्ष्मतरत्वं वक्तुं शक्यते ऽव्यक्तादपि दुर्विज्ञेयत्वात्कारणत्वरूपपरत्वं कथं कारणत्वं वाऽव्यक्तवद्वि कारित्वेनासत्त्वापत्तेरिति चेदधिष्ठानपरतन्त्रत्वादारोपस्याधिष्ठानस्योपचारेणात्मनः कारणत्वमुच्यत इति न दोषः। पारतन्त्र्यं चाव्यक्तस्य पृथक् सत्त्वे प्रमाणाभावादात्मसत्तयैव स त्तावत्त्वाच्चेति भावः प्रत्यगात्मेति पूर्वत्र सापेक्षप्रत्यक्त्वं अत्र तु स्वाभाविकमेव विवक्षितं दर्शयिषितवस्तुत्वादिति भावः। अत एव निरतिशयमहत्त्वादेवेत्यर्थौ वधियत इत्याह। तत इति प्रसंगं सत्त्वस्येति शेषः।पुरुषात्परं किंचिन्नेत्यर्थहेतूकृत्य सेत्यादिवाक्यं व्याचष्टे। यस्मान्नास्तीत्यादिना। पर्यवसानमुपपादयति॥ अत्रहीति आत्मनीत्यर्थः। अत एव सूक्ष्मत्वादिप

अव्याकृतनामरूपसतत्त्वं सर्वकार्यकारणशक्तिसमाहाररूपं अव्यक्ताव्याकृताकाशादिनामवाच्यं परमात्मन्योतप्रोतभावेन समाश्रितं वटकणिकायामिव वटशक्तिः। तस्मादव्यक्तात्परः सूक्ष्मतरः सर्वकारणकारणत्वात्प्रत्यगात्मत्वाच्च महांश्चातएव पुरुषः सर्वपूरणात् ततोऽन्यस्य परस्य प्रसंगं निवारयन्नाह। पुरुषा न्नपरं किंचिदिति। यस्मान्नास्ति पुरुषाच्चिन्मात्रघनात्परं किंचिदपि वस्त्वन्तरं तस्मात्सूक्ष्मत्वमहत्त्वप्रत्यगात्मत्वानां साकाष्ठा निष्ठा पर्यवसानं। अत्रहीन्द्रियेभ्य आरभ्य सूक्ष्मत्वादि परिसमाप्तं अत एव च गन्तॄणां सर्वगतिमतां संसारिणां परा प्रकृष्टा गतिः। यद्गत्वा न निवर्तन्त इति स्मृतेः। ननु गतिश्चेदागत्यापि भवितव्यं कथं य

अव्यक्तात्पुरुषः परः। पुरुषान्नपरं किंचित्साकाष्ठासापरागतिः॥ एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते॥

स्माद्भूयो न जायत इति। नैष दोषः सर्वस्य प्रत्यगात्मत्वादवगतिरेवगतिरितिउपचर्यते प्रत्यगात्मत्वं च दर्शितं इन्द्रियमनोबुद्धिपरत्वेन यो हि गन्ता सोऽगतमप्रत्यग्रूपं प रूपं गच्छत्यनात्मभूतं न विपर्ययेण। तथा च श्रुतिः। अनध्वगा अध्वसु पारमीप्सव इत्याद्या तथा च दर्शयति प्रत्यगात्मत्वं सर्वस्य एष पुरुषः सर्वेषु ब्रह्मादिस्त म्बपर्यन्तेषु भूतेषु गूढः संवृतो दर्शनश्रवणादिकर्मा विद्यामायाच्छन्नो ऽत एवात्मा न प्रकाशते आत्मत्वेन कस्यचित्॥ पर्यवसानभूमित्वादेव। प्रकृष्टगतित्वे प्रमा णमाह। यदिति तद्धाम परमं ममेति वाक्यशेषः गतिशब्दस्य यथाश्रुतमर्थं गृहीत्वाशंकते ननु इति परिहरति। नैषदोष इति। प्रत्यग्भिन्नस्य हि गत्यावाप्तिर्मुख्या तस्यतूपचारे णेत्यत्र पूर्वोक्तं हेतुमाह। प्रत्यगात्मत्वं चेति। तर्हि प्रतीचः प्राप्तत्वेन ज्ञानादिवैयर्थ्यमित्याशंक्याविद्ययाऽनात्मरूपमापन्नो यः सोऽधिकारी तं प्रत्यगात्मानमनात्मव्युदासेन प्राप्नोती त्याह। यो हीति हि शब्दसूचितां श्रुतिमाह। तथा चेति। अनध्वगाः मार्गरहिता पारमीप्सवः संसारपारं गन्तारः इत्यर्थः। गतेरौपचारिकत्वे सर्वस्य प्रत्यगात्मत्वं श्रुतिर्दर्शयतीत्यव तारयति तथा चेति संवृतो न प्रकाशत इत्यन्वयः। न प्रकाशते चेत्तर्हि नास्त्येवेति न वाच्यं लिंगदर्शनादित्याह। दर्शनेति। दर्शनश्रवणादीनि कर्माण्यस्येति तथा ननु जीवस्येव प्रका शो ब्रह्मात्मत्वे कुतो ऽनवभासस्तत्राह। अविद्यामायाछन्न इति। अविद्येति ज्ञाननिरस्यत्वमुच्यते मायेति मिथ्यात्वमुच्यते। अत एव यतश्छन्नः कस्यचिदपि आत्मात्मत्वेन न प्रकाश

एष इत्यादिश्रुतेरस्मदर्थमुक्त्वा प्राणिष्वनुकंपां दर्शयन्नूक्ते तात्पर्यार्थमाह। अत इति। यतः स्वप्रकाशप्रत्यक्चैतन्यावरिकाऽविद्याऽतोऽतिगंभीरा नक्रादिसंवलितगंगाह्रदइव विमर्शनीयस्वरूपा यत एवमतो दुरवगाह्या मायायां स्थित्वा मायारूढा विभूतिरियतीति निर्धारयितुं न शक्यते केनचित् तत्रैवंभूतमायायाः सविलासकत्वं प्रदर्श्य स्वरूपावरकत्वे हेतुमाह। विचित्रा चेति। इदमहमज्ञ इत्यनुभवसिद्धा नानाशक्तियुक्ता अघटनघटनापटीयसी। तत्र हेतुमाह॥ यदिति। यस्मादित्यर्थः। अयं संसरन् दृश्यमानः सर्वप्राणिवस्तुतः परमार्थस्वरूपोऽप्येवं बोध्यमानः परएवात्मा नासि संसारी त्वहं परएवात्मेति न गृह्णाति घटादिवदात्मनो दृश्यमानमपि देहेंद्रियादिसंघातमनात्मानं त्वं देवदत्तपुत्रो विष्णुमित्र इत्यनुच्यमानोऽप्यनुपदिश्यमानोऽप्यहममुष्य पुत्र इत्यात्मत्वेन गृह्णातीत्यन्वयः॥ स्वस्वरूपमखंडाद्वितीयमुच्यमानमपि न गृह्णातीत्यनुक्तमप्यनात्मस्वरूपमात्मत्वेन गृह्णातीत्यत्र को हेतुरिति विचारे इदं निश्चितमित्याह। नूनमिति॥ मोमुह्यमानः पुनः पुनरतिशयेन वा मोहमापद्यमानो बंभ्रमीति पुनः पुनरतिशयेन भ्रमतीत्यर्थः मायाधीनमोहादात्मा॥

अहोऽतिगंभीरा दुरवगाह्या विचित्रा माया चेयं। यदयं सर्वो जंतुः परमार्थतः परमार्थसतत्त्वोऽपि एवं बोध्यमानोऽहं परमात्मेति न गृह्णाति अनात्मानं देहेंद्रियादिसंघातमात्मनो दृश्यमानमपि घटादिवदात्मत्वेनाहममुष्य पुत्र इत्यनुच्यमानोऽपि गृह्णाति नूनं परस्यैव मायया मोमुह्यमानः सर्वो लोको बंभ्रमीति। तथा च स्मरणं। नाहं प्रकाशः सर्वस्य योगमायासमावृत इत्यादि। ननु विरुद्धमिदमुच्यते। मत्वा धीरो न शोचति न प्रकाशत इति च नैतदेवं। असंस्कृतबुद्धेरविज्ञेयत्वान्न प्रकाशत इत्युः

दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः॥ यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञान आत्मनि॥

कं। दृश्यते त्वग्र्यया संस्कृतयाऽग्र्या मिवाग्र्यात पाएकाग्रतयोपेतयेत्येतत्। सूक्ष्मया सूक्ष्मवस्तुनिरूपणपरया कैः सूक्ष्मदर्शिभिः इंद्रियेभ्यः परा ह्यर्था इत्यादिप्रकारेण सर्वविशेषसूक्ष्मतापारंपर्यदर्शनेन परं सूक्ष्मं द्रष्टुं शीलं येषां ते सूक्ष्मदर्शिनस्तैः सूक्ष्मदर्शिभिः पंडितैरित्येतत्। तत्प्रतिपत्त्युपायमाह। यच्छेन्नियच्छेदुपसंहरेत्प्राज्ञो विवेकी॥ किं वाक् वाचं वागत्रोपलक्षणार्था सर्वेषामिंद्रियाणां। क्व। मनसि मनसी तिछांदसं दैर्घ्यं। तच्च मनो यच्छेत् ज्ञाने प्रकाशस्वरूपे बुद्धावात्मनि बुद्धिर्हि मन आदि

प्रकाशे संसरणे च भगवतः स्मरणं प्रमाणयति। तथा चेति। योगमायासमावृत इति वाक्यशेषः। चोद्योत्तरवाक्यं व्याचष्टे। नन्वित्यादिना। एतद्धि रुद्धत्वमेवं त्वदुक्तप्रकारेण न भवति श्रुत्योर्विषयभेदात् न प्रकाशत इत्यस्यार्थं दर्शयति। असंस्कृतेति। निदिध्यासनप्रचयजन्यसंस्काररहिताया बुद्धेरित्यर्थः। मत्वा धीरो न शोचतीत्यस्याशयं श्रुतिः स्वयमेव दर्शयति। दृश्यते त्विति। संस्कृतया निदिध्यासनप्रचयजन्यसंस्कारयुक्तयाएकं ब्रह्मात्मैक्यं अग्रं मुख्यं लक्ष्यं यस्यास्तस्या भावः एकाग्रता तया सहितयेत्येतत्। सूक्ष्मं दुर्विज्ञेयं वस्तु ब्रह्मात्मैक्यं तस्य निरूपणे निश्चये तात्पर्यवत्या। कर्तृपदमाकांक्षापूर्वकं व्याचष्टे। कैरिति। सूक्ष्मदर्शिभिः पंडितैः सूक्ष्मयाऽग्र्यया बुध्या त्मा दृश्यत इति योजना। ब्रह्मज्ञानसाधनत्वेनोत्तरं वाक्यं व्याचष्टे। तदिति। तस्यात्मनः प्राप्तिः तत्साधनीभूतं ज्ञानं तदुपायमित्यर्थः। ननूपसंहारेऽपि वाच इतरेंद्रियाणां सव्यापाराणामनुपसंहारे तन्मात्रं न ज्ञानसाधनमित्याशंक्याह। वागत्रोपलक्षणार्थेति। आकांक्षापूर्वकमधिकरणं निर्दिशति। क्वेति। दैर्घ्यस्य गतिमाह। मनसीतीति। संकल्पविकल्पात्मकमनसो बुद्धितंत्रत्वात्तस्यां लयस्य कर्तव्यतया प्रकाशसामान्यज्ञानशब्देन मन आदिकरणव्या

ज्ञानइत्यादिनाह्रियस्मादर्थै नन्वात्ममहच्छब्दाभ्यांव्यापकप्रत्यगात्मनोभिधानात्कथंप्रथमजेहिरण्यगर्भेबुद्धौव्यष्टिबुद्धेःप्रविलापनमित्याशंक्यतदुत्तरपर्यायेशांतआत्मे
तिविशेषणात्प्रत्यस्तमितसर्वविशेषणवत्येतस्यलयप्रतिपादनात्तस्यग्रहणंनविरुध्यते।नचव्यष्टिबुद्धेःसमष्टौलयश्चेत्तस्याःपरमकारणेलयोवाच्यस्तद्विनानिर्विशेषेलयः
कथमितिवाच्यंआत्ममहच्छब्दाभ्यांसकारणससूत्रहैरण्यगर्भबुद्धेर्ग्रहान्नदोषइतिभावःसमष्टिव्यष्ट्योःसाम्यंलयनिमित्तमाह। स्वच्छेति॥स्वच्छस्वभावकंप्रथमजंवि
ज्ञानंप्रत्यगात्मोपाधिभूतविज्ञानमापादयेदित्यर्थः॥ सर्वेति। सर्वेविशेषाःप्रत्यस्तमिताःलीनायस्मिन्तत्तच्चतद्रूपंचतस्मिन्।तत्रहेतुः।अविक्रियइतिएवमुत्तरोत्तरंहेतुत्वे
नव्याख्येयंमुख्येआत्मनितंयच्छेदित्यन्वयः॥विषयदोषदर्शनेनबाह्यांतःकरणव्यापारप्रविलापनेतत्कर्तृकःकःपुरुषार्थःसेत्स्यतीत्याशंक्याह। एवंपुरुषइत्यादिना। एवंय
च्छेदित्याक्रमेणप्रत्यगात्मस्वरूपसाक्षात्कारेणसमस्तंप्रकर्षेणविलाप्यकृतकृत्योभवतीत्यन्वयः आत्मव्यावृत्त्यर्थंसर्वेविशिनष्टि॥नामेति॥शब्दार्थक्रियात्रयमित्यर्थः

ज्ञानंबुद्धिमात्मनिमहतिप्रथमजेनियच्छेत्।प्रथमजत्वात्स्वच्छस्वभावकमात्मनोविज्ञानमापादयेदित्यर्थः।तंचमहांतमात्मानंयच्छेत्शांतेसर्वविशेषप्र
त्यस्तमितरूपेऽविक्रियेसर्वांतरेसर्वबुद्धिप्रत्ययसाक्षिणिमुख्यआत्मनि।एवंपुरुषःआत्मनिसर्वंप्रविलाप्यनामरूपकर्मत्रयंयन्मिथ्याज्ञानविजृंभि
तंक्रियाकारकफललक्षणंस्वात्मयाथात्म्यज्ञानेनमरीच्युदकरज्जुसर्पगगनमलानीवमरीचिरज्जुगगनस्वरूपदर्शनेनेवस्वस्थःप्रशांतात्माकृतकृत्यो

ज्ञानमात्मनिमहतिनियच्छेत्तद्यच्छेच्छांतआत्मनि।उत्तिष्ठतजाग्रतप्राप्यवरान्निबोधत।

भवति।यतोऽतस्तद्दर्शनार्थंअनाद्यविद्याप्रसुप्ताउत्तिष्ठतहेजंतवआत्मज्ञानाभिमुखाभवतजाग्रतअज्ञाननिद्रायाघोररूपायाःसर्वानर्थबीजभूतायाःक्षयंकु
रुत।कथंप्राप्योपगम्यवरान्प्रकृष्टानाचार्यांस्तद्विदस्तदुपदिष्टंसर्वांतरमात्मानमहमस्मीतिनिबोधतावगच्छतनह्युपेक्षितव्यमितिश्रुतिरनुकंपयाऽऽहमा
तृवदितिसूक्ष्मबुद्धिविषयत्वात्ज्ञेयस्यकिमिवसूक्ष्मबुद्धिरित्युच्यतेक्षुरस्यधाराग्रंनिशितातीक्ष्णीकृतादुरत्ययादुःखेनात्ययोयस्याःसादुरत्यया ॥ ॥

तस्यसत्यत्वंव्यावर्त्तयति।यदिति।मिथ्याचतदज्ञानंचमिथ्याज्ञानंतेनविजृंभितंनिष्पादितंयत्तत्सर्वमित्यन्वयः।ज्ञानफलंनकर्मसाध्यमितिज्ञापयितुंकर्मफलंसंसारांतरगत
मेवेतिदर्शयति।क्रियेतिसम्यक्ज्ञानेनसर्वविलापनेकृतकृत्यतेत्यत्रदृष्टांतमाह॥मरीचीति॥मरीच्यादिदर्शनेनतदुदकादिप्रविलाप्यलौकिकःपुमान्यथास्वस्थःतथास्व
स्थःसर्वबाह्येंद्रियव्यापाररहितःप्रशांत आत्मांतःकरणंयस्यसर्वमनोव्यापाररहितःप्रशांतात्माकर्त्तव्याभावात्कृतकृत्योभवतीत्यर्थः।उक्तमर्थंहेतुंकृत्वउत्तरंवाक्यमव
तारयति।यतोतइति।तद्दर्शनार्थंकृतकृत्यताहेतुदर्शनार्थंअनाद्यविद्यायांप्रसुप्तास्तत्तंत्राआत्मज्ञानाभिमुखाइतीश्वरार्पितकर्मतश्चित्तशुद्धिविविदिषाक्रमेणश्रवणा
दिपराइत्यर्थः।घोरोदुःखबहुलःसंसारदावोरूपंयस्याःसातस्याघोररूपत्वंविवृणोति सर्वेति।क्षयंकुरुतसाक्षात्कारेणेतिशेषः।तत्साक्षात्कारआचार्याधीनइत्याकांक्षापूर्वकं
दर्शयति।कथमित्यादिना॥तेषांवरत्वंव्याचष्टेतद्विदइति।निबोधतेत्यस्यापेक्षितंकर्मपूरयति। तदित्यादिना॥अक्षरार्थमुक्त्वातात्पर्यार्थमाह नहीति ॥ ॥ ॥

तदुपेक्षणे ऽनर्थप्राप्तिसूचको हि शब्दः इति वक्ष्यमाणप्रकारार्थः। आदरेणश्रुत्यभिधाने हेतुः। सूक्ष्मेति॥ आकांक्षापूर्वकं उत्तरवाक्यं व्याचष्टे किमिवेति। तीक्ष्णीकृता पाषाणा
दाविति शेषः। पदार्थमुक्त्वा विवक्षितं वाक्यार्थमाह। यथेति। छांदसत्वाद्वचनव्यत्यय इत्याह। पथानमिति॥ ननु वस्तुनः सूक्ष्मत्वे ज्ञानस्यापि तथात्वात् दुर्गमत्वमसिद्धमि
त्याशंक्य। कवयो वदंतीत्यस्य तात्पर्यार्थमाह। ज्ञेयस्येति। तदेवासिद्धमित्याशंकते। कथमिति। स्थूलसूक्ष्मतारतम्यविश्रांतिस्थानत्वादति सूक्ष्मं ज्ञेयं ब्रह्मेत्याह। उच्यत इ
ति यावत्यावद्गुणा पचयस्तावत्तावत्तारतम्येन सौक्ष्म्यं पृथिव्यादिषु दृष्टं परमात्म निर्गुणा नामत्यंतमभावान्निरतिशयं सौक्ष्म्यं सिध्यतीति पृथिव्यादिषु तारतम्येन सौक्ष्म्यमुप
पादयति स्थूलेत्यादिना। शब्दादिरूपेण वृद्धौ हेतुमाह। सर्वेति। पृथिव्युक्तन्यायं पार्थिवे शरीरे तिदिशति। तथेति तत्र पृथिवीतच्छरीरयोरपकर्षे ऽपगमे अबादिषु सूक्ष्मत्वा
दितारतम्यं दृष्टमित्यन्वयः तारतम्यदृष्टावधिमाह। यावदाकाशमिति। यावच्छब्दोभिव्याप्तौ आत्मनो निरतिशयं सूक्ष्मत्वादिकैमुतिकन्यायेनोपपादयति। तइति। ते

पथा सा पद्यादुर्गमनीया तथा दुर्गं दुःसंपाद्यमित्येतत् पथः पंथानं तत्त्वज्ञानलक्षणं मार्गं कवयो मेधाविनो वदंति। ज्ञेयस्याति सूक्ष्मत्वात्तद्विषयस्य ज्ञा
नमार्गस्य दुःसंपाद्यत्वं वदंतीत्यभिप्रायः। तत्कथमतिसूक्ष्मत्वं ज्ञेयस्येत्युच्यते॥ स्थूला तावदियं मेदिनी शब्दस्पर्शरूपरसगंधोपचिता सर्वेंद्रियविष
यभूता तथा शरीरं तत्रैकैकगुणापकर्षेण गंधादीनां सूक्ष्मत्वमहत्त्वविशुद्धत्वनित्यत्वादितारतम्यं दृष्टमबादिषु यावदाकाशमिति ते गंधादयः सर्व एव
स्थूलत्वाद्विकाराः शब्दांताः यत्र न संति किमुत तस्य सूक्ष्मत्वादि निरतिशयत्वं वक्तव्यमित्येतद्दर्शयति श्रुतिः॥ अशब्दमस्पर्शमरूपमव्ययं तथा ऽरसं नित्य

क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदंति॥ अशब्दमस्पर्शमरूपमव्ययं तथा ऽरसं नित्यमगंधवच्च यत्॥

मगंधवच्च यत्॥ एतद्व्याख्यातं ब्रह्माव्ययं। यद्धि शब्दादिमत्तद्व्येतीदं तु अशब्दादिमत्त्वादव्ययं न व्येति। न क्षीयते ऽत एव च नित्यं यद्धि व्येति तदनित्यं इ
दं तु न व्येति अतो नित्यं। इतश्च नित्यं अनादि अविद्यमानमादिकारणमस्य तदिदमनादि। यद्ध्यादिमत्तत्कार्यत्वादनित्यं कारणे प्रलीयते यथा पृथिव्यादि
इदं तु सर्वकारणत्वादकार्यं अकार्यत्वान्नित्यं न तस्य कारणमस्ति यस्मिन्प्रलीयेत। तथानंतं नित्यं अविद्यमानो ऽतः कार्यमस्य तदनंतं यथा कदल्यादेः
फलादिकार्योत्पादनेनाप्यनित्यत्वं दृष्टं न च तथाप्यंतवत्त्वं ब्रह्मणो ऽतोपि नित्यं महतो महत्तत्त्वाद्बुद्ध्याख्यात्परं विलक्षणं नित्यविज्ञप्तिस्वरूपत्वात्सर्वसाक्षी

गंधादयः शब्दांताः स्थूलत्वादिकारणाः स्थूलत्वसूक्ष्मत्वसूक्ष्मतरत्वसूक्ष्मतमत्वादिकारणाः ज्ञापकाः सर्व एव यत्र न संति प्रतीचि तस्य सूक्ष्मत्वादेर्निरतिशयत्वं किमु वक्तव्य
मित्यन्वयः। उक्तेर्थे श्रुतिं योजयति इत्येतदिति शब्दादिराहित्यमव्ययत्वे अव्ययत्वं नित्यत्वे हेतुरिति पाठक्रमम विवक्षितत्वात्। यद्धीति नित्यत्वे हेत्वंतरमाह। इतश्चेति। उक्त
मर्थमुपपादयति। यद्धीति। नन्वात्मनोपि लयोस्ति कारणसंसर्गलक्षण इत्याशंक्य न तस्य कार्यं कारणं च विद्यत इति श्रुत्यंतरान्न कारणे लय इत्याह। न तस्येति। स्वतो लयाभा
वेपि कार्यद्वारा लयमाशंक्याह। तथेति। कार्यद्वारा नाशे दृष्टांतमाह। यथेति। फलितं दर्शयति। अतोपीति विलक्षणत्वे हेतुमाह॥ नित्येति॥ तच्च नास्तीति वक्तुं न शक्यत इत्याह॥





दिकारणा

सर्वभूतेति। नह्यात्मनः प्रतिषेधः संभवतीतिभावः। ब्रह्मनिरतिशयमहदित्यर्थः। उक्तेर्थे श्रुतिं प्रमाणयति। उक्तं हीति। तच्च न पृथिव्यादिवत्सरिणामि निरवयवत्वाद् ध्रुवमिति। एवं ब्र
ह्मात्मनोतिसूक्ष्मत्वेन दुर्विज्ञेय त्वात्तज्ज्ञानस्यापि दुःसंपाद्यतामुक्त्वा ब्रह्मात्मज्ञानं सफलमुपसंहरति। तमित्यादिना॥ ननु विज्ञानस्य सफलस्योक्तत्वादुत्तरग्रंथः किमित्या
ह॥ प्रस्तुतेति॥ प्रकृतब्रह्मात्मविज्ञानसाधनस्तुत्यर्थमाख्यायिकामाह॥ श्रुतिरित्यर्थः चिरंतनत्वे हेतुमाह॥ वैदिकत्वादिति। षष्ठीसमासभ्रमं व्यावर्त्तयति। ब्रह्मैवेतिवाक्यार्थमा
ह॥ आत्मेति॥ प्रयतद्वत्युभयत्रान्वेति। आनंत्यफलायक्रमेणेतिशेषः॥ ॥ इतिकठोपनिषद्भाष्यविवरणे प्रथमोध्यायः समापितः॥ १॥ ॥ अनाद्यविद्याप्रतिबंधः प्रागुक्तोऽधु
नागंतुकप्रतिबंधप्रकाशनायोत्तरवल्यारंभ इति संबंधमाह। एषइति। इत्युक्तमनेनवाक्येनानाद्यविद्याप्रतिबंधस्वरूपमितिशेषः॥ कः पुनरिति। पुनः कीदृशोऽनाद्यविद्याया

उक्तं ह्येष सर्वेषुभूतेषु इत्यादि ध्रुवं च कूटस्थं नित्यं न पृथिव्यादिवदापेक्षिकं नित्यत्वं। तमेवंभूतं ब्रह्मात्मानं निचाय्य दृष्ट्वावगम्य तमात्मानं मृत्युमुखात्
मृत्युगोचरात् अविद्याकामकर्मलक्षणात्प्रमुच्यते वियुज्यते॥ प्रस्तुतविज्ञानस्तुत्यर्थमाह श्रुतिः। नाचिकेतं नचिकेतसा प्राप्तं नाचिकेतं मृत्युना
प्रोक्तं मृत्युप्रोक्तमिदमाख्यानमुपाख्यानं वल्लीत्रयलक्षणं सनातनं चिरंतनं वैदिकत्वात् उक्त्वा ब्राह्मणेभ्यः श्रुत्वाचार्येभ्यो मेधावी ब्रह्मैव लोको ब्रह्म
लोकस्तस्मिन् महीयते आत्मभूत उपास्यो भवतीत्यर्थः यः कश्चिदिमं ग्रंथं परमं प्रकृष्टं गुह्यं गोप्यं श्रावयेत् ग्रंथतोऽर्थतश्च ब्राह्मणानां संसदि ब्रह्मसं

अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते॥ नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनं॥ उक्त्वा श्रु ॥ ॥
त्वा च मेधावी ब्रह्मलोके महीयते। यइमं परमं गुह्यं श्रावयेद् ब्रह्मसंसदि। प्रयतः श्राद्धकाले वा तदानंत्याय कल्प्यते तदानंत्याय कल्पत इति॥

सदि प्रयतः शुचिर्भूत्वा श्राद्धकाले वा श्रावयेत् भुंजानानां तच्छ्राद्धमस्यानंत्यायानंतफलाय कल्प्यते समर्थ्यते द्विर्वचनमध्यायसमाप्त्यर्थं॥ इति तृतीया
वल्ली ३ इतिश्रीगोविन्दभगवत्पूज्यशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छंकरभगवतः कृतौ कठोपनिषद्भाष्ये प्रथमोध्यायः समाप्तः॥ ॥ ॐ
एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुध्या इत्युक्तं। कः पुनः प्रतिबंधोऽग्र्याया बुद्धेर्येन तदभिभवादात्मा न दृश्यत इति तद्दर्शनकार
णप्रदर्शनार्था वल्ली आरभ्यते विज्ञाते हि श्रेयः प्रतिबंधकारणे तदपनयाय यत्न आरब्धुं शक्यते नान्यथेति॥

अन्यः प्रतिबंधः यस्य प्रतिबंधस्य कादाचित्कस्याभावादात्माग्र्यया बुध्या दृश्यते स प्रतिबंधोग्र्याया बुद्धेः कः कीदृशः किंस्वरूपः किंकार्यक इत्यर्थः॥ इत्येवमाकांक्षायां तद्दर्शयति कादा
चित्कप्रतिबंधस्य दर्शनं ज्ञानं तस्य कारणं लिंगं निमित्तं तस्य प्रदर्शनायेत्यर्थः। कादाचित्कप्रतिबंधश्चाध्यास इति भावः। ननु प्रतिबंधकतन्निमित्तनिरूपणमनर्थकं निवर्त्तकोपदे
शात्तन्निवृत्तेरित्याशंक्याह। विज्ञात इति हि यस्मादध्यासनिमित्ते सम्यक् ज्ञाते निमित्तस्य निवृत्तये यत्न आस्थातुं शक्य तदित्यर्थः। नान्यथेत्यनंतरं तस्मादध्यासनिमित्तनिरूपण
मुचितमितिशेषः॥

अक्षराणि व्याचष्टे। पराञ्चीत्यादिना॥ खशब्दोपात्तश्रोत्रभेदशंकां वारयति। तदिति। खोपलक्षितानीत्यर्थः खोपलक्षितानीत्यपि पाठः। तेषां परात्वं विवृणोति तानीति। पराञ्च्ये
व पराग्विषयप्रकाशनसमर्थान्येवेत्यर्थः। फलमाह। शब्दादीति। एवंस्वभावकानि पराग्विषयाभिमुखस्वभावानि तानींद्रियाणि हननं कृतवानिति कथं तेषां हननं नाशः नष्टा
नां च न विषयोपनयनद्वारानर्थहेतुतेति चेद्यद्देवेंद्रियाण्यंतर्मुखानि स्युस्तदा तान्यात्मनिष्ठतयाऽमृतत्वसाधनानीत्यत इन्द्रियाणि बहिर्मुखानि सृष्टानीति यत्तत्तेषां हननमेव
कृतमिति भावः। कर्तृपदमाकांक्षापूर्वकं व्याचष्टे कोसाविति हिरण्यगर्भशंकां प्रकरणेन वारयति। परमेश्वर इति स्वयंभवति प्रभवतीति योगवृत्तिमर्थतस्तस्मिन्दर्शयति। स्वयमेवे
ति। एवकारव्यावर्त्यं दर्शयति। नेति। तस्मादिति यस्मात्खानि परांचि व्यतृणत्तस्मादित्यर्थः। उपलब्धोपलभत इंद्रियैरिति शेषः विभक्तिलोपश्छांदस इत्याह नेत्यादिना। नन्विंद्रि
याणां प्रत्यक्प्राङ्मुख्याभावादात्मदर्शनमेव न मृग्यमधिकार्यभावादित्याशंक्याह। एवमिति अनात्मभूतशब्दादिविषयोपलब्धृस्वभावत्वेपीत्यर्थः। कश्चिदित्यधिकारिदौर्ल॰
भ्यं द्योतयति। यथा कश्चित्कार्त्तवीर्यादिर्नद्या नर्मदादिरूपायाः प्रतिस्रोतः प्रवर्त्तनं करोति एवमनेकजन्मसंसिद्ध इंद्रियप्रवृत्तिनदीप्रतिस्रोतः प्रवर्त्तनं कृत्वा गुरुमुपगतो विवे॰

पराञ्चि पराग् अंचंति गच्छंतीति खानि तदुपलक्षितानि श्रोत्रादीनींद्रियाणि खानीत्युच्यंते तानि पराञ्च्येव शब्दादिविषयप्रकाशनाय प्रवर्त्तंते य
स्मादेवंस्वाभाविकानि तानि व्यतृणद्धिंसितवानित्यर्थः। कोसौ स्वयंभूः परमेश्वरः स्वयमेव स्वतंत्रो भवति सर्वदा न परतंत्र इति। तस्मात्पराङ्प
राग्रूपाननात्मभूतान् शब्दादीन् पश्यत्युपलभते उपलब्धा नांतरात्मन्। अंतरात्मानमित्यर्थः॥ एवंस्वभावेपि सति लोकस्य कश्चिन्नद्याः प्रतिस्रोतः

ॐ पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नांतरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षत्

प्रवर्त्तनमिव धीरो धीमान् विवेकी प्रत्यगात्मानं प्रत्यक् चासावात्मा चेति प्रत्यगात्मा प्रतीच्येवात्मशब्दो रूढो लोके नान्यस्मिन् व्युत्पत्तिपक्षेपि
तत्रैवात्मशब्दो वर्त्तते॥ तदुक्तं। यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य संततो भावस्तस्मादात्मेति कीर्त्यत इति आत्मशब्दव्युत्प॰
त्तिस्मरणात् तं प्रत्यगात्मानं स्वं स्वभावमैक्षदपश्यत् पश्यतीत्यर्थः। छंदसि कालानियमात्॥ ११ कीतत्वंपदार्थविवेकवान्प्रत्यगात्मानं स्वं स्वभावं पश्यती
ति संबंधः। प्रत्यगात्मपदं व्याचष्टे। प्रत्यक्चेति। नन्वात्मशब्दवाच्यः प्रसङ्गे देहादिरपि भवतीत्याशंक्याह। प्रतीच्येवेति। अन्यस्मिन् देहादावात्मशब्दप्रयोगस्तु तादात्म्याऽभि
मानादिति भावः। यौगिकी वृत्तिस्तत्रैवेत्याह। व्युत्पत्तीति। तत्रैव प्रत्यगात्मन्येव। आप्लृ व्याप्ताविति धात्वर्थानुगमादात्मा व्यापक इत्याह यच्चाप्नोतीति यच्छब्दाः सर्वे यस्मादर्थे द्रष्ट
व्याः। आदत्ते संहरति स्वात्मन्येव सर्वमिति लयाधिष्ठानमुच्यते कार्यस्य च कारणे लय इत्यात्मनोऽनया व्युत्पत्त्योपादानकारणत्वं लभ्यते। इह लोके विषयानत्तीत्यनेन योगेनो
पलब्धृत्वमात्मनो लभ्यते अस्य जगतः संततो निरंतरो भावः सत्ता येनाधिष्ठानसत्तातिरिक्तसत्ताशून्यत्वादारोपितस्य रजतस्येव तस्मादात्मेत्यधिष्ठानत्वं लभ्यते। नन्व
पश्यदिति भूतकालनिर्देशान्नाधुनातनानां दर्शनमित्याशंक्याह। पश्यतीति। कथंभूतलकारो वर्त्तमानार्थक इति तत्राह॥ छन्दसीति॥ ॥ ॥

दर्शनप्रकारमाकांक्षापूर्वकं दर्शयति॥ कथमित्यादिना॥ चक्षुर्ग्रहणमुपलक्षणमित्याह। श्रोत्रादिकमिति। व्यावृत्तत्वं कस्मादित्याकांक्षायामपेक्षितं पूरयति। अशेषेति। सोधिकारी एवं संस्कृतः विषयेभ्यः इन्द्रियनियमनसंस्कारसंस्कृतां तःकरण इत्यर्थः। ननु बाह्येषु विषयेषु शोभनाध्यासरूपालोचनपरस्यापि तत्त्वमसीतिवाक्यादात्मेक्षणं संभवतीत्याशंक्याह। नहीति। ननु विषयालोचनपरस्यापरोक्षभ्रमनिवर्तकज्ञानानुदयेपि तन्नियमनसंस्कृतस्योत्पन्नमपि ज्ञानं व्यर्थमित्याशंक्य तेकिमर्थं पुनरिति परिहरति उच्यत इति। अमरणधर्मत्वं मरणादिसंसाराभावोपलक्षितस्वरूपत्वम तएव नित्यस्वभावत्वमात्मन इच्छन्नित्यन्वयः। पराचः कामानितिव्याख्यातुं भूमिकामारचयति यदितिस्वाभाविकं शास्त्रानपेक्षं परागेवेत्यस्य व्याख्या। आत्मदर्शनमितिप्रतिबंधनस्य दुरदुष्टादेः कारणमनात्मदर्शनमित्यत्र हेतुमाह। प्रतिकूलत्वादिति। अविद्येतिशेषः। तृ

कथं पश्यतीत्युच्यते। आवृत्तचक्षुरावृत्तं व्यावृत्तं चक्षुः श्रोत्रादिकमिन्द्रियजातं अशेषविषयाद्यस्य स आवृत्तचक्षुः स एवं संस्कृतः प्रत्यगात्मानं पश्यति नहि बाह्यविषयालोचनपरत्वं प्रत्यगात्मेक्षणं चैकस्य संभवति किमर्थं पुनरित्थं महता प्रयासेन स्वभावप्रवृत्तिनिरोधं कृत्वा धीरः प्रत्यगात्मानं पश्यतीत्युच्यते। अमृतत्वममरणधर्मत्वं नित्यस्वभावतामिच्छन् आत्मन इत्यर्थः। यत्तावत्स्वाभाविकं परागेवानात्मदर्शनं तदात्मदर्शनस्य प्रतिबंधकारणं तत्प्रतिकूलत्वाद्याच परास्वेवाविद्यादर्शितेषु दृष्टादृष्टेषु भोगेषु तृष्णा ताभ्यामविद्या

आवृत्तचक्षुरमृतत्वमिच्छन्। पराचः कामाननुयंति बालास्ते मृत्योर्यंति विततस्य पाशं॥

तृष्णाभ्यां प्रतिबद्धात्मदर्शनाः पराचो बहिर्गतानेव कामान्काम्यान्विषयाननुयंति अनुगच्छंति बाला अल्पप्रज्ञास्ते न कारणेन मृत्योरविद्याकामकर्मसमुदायस्य यंति गच्छंति विततस्य विस्तीर्णस्य सर्वतो व्याप्तस्य पाशं पाश्यंते बध्यंते येन तं पाशं देहेंद्रियादिसंयोगवियोगलक्षणं अनवरतं जन्ममरणजरारोगाद्यनेकानर्थव्रातं प्रतिपद्यंत इत्यर्थः॥ यत एवं अथ तस्माद्धीरा विवेकीनः प्रत्यगात्मनः स्वरूपावस्थानलक्षणममृतत्वं ध्रुवं विदित्वा देवाद्यमृतत्वं ह्यध्रुवमिदं तु प्रत्यगात्मस्वरूपावस्थानलक्षणं ॥

ष्णा स्वरूपं दर्शयति। याचेति। परास्वेवेत्यस्य व्याख्या दृष्टेत्यादि। परात्वे हेतुमाह। अविद्येति। भुज्यंत इति भोगास्तेषु ताभ्यामनात्मदर्शनभोगेच्छारूपाभ्यां प्रतिबद्धमात्मनः परात्मत्वेन दर्शनं येषां ते तथा। पराच इत्यस्य व्याख्या बहिरिति। अल्पप्रज्ञानामनुगमनं नाम अनात्मदर्शनतृष्णाप्रेरिताः संतः कामानां लब्धारो भवंतीत्येतत्। तेन कारणेन विषयानुगमेन कारणेन विततस्य मृत्योः पाशं यंतीत्यन्वयः। मृत्युशब्दार्थमाह। अविद्येति विततशब्दार्थमाह। विस्तीर्णस्येत्यादि। अवयवव्युत्पत्तिपूर्वकं पाशशब्दार्थमाह। पाश्यंत इति। अर्थांतरमाह। अनवरतेति। अनवरतेत्यादि पूर्वविशेषणं वानर्थस्य व्रातो यस्मिन्निति विशेषणपक्षे विग्रहो भवति। यंतीत्यस्यार्थमाह। प्रतीति। अथवा पदार्थमुक्त्वा वाक्यार्थमाह। अनवरतेति। एवमनात्मप्रवणस्य संसार उक्तप्रकारेण यत इत्यर्थः॥ प्रत्यक्स्वरूपावस्थानरूपं ध्रुवत्वमुपपादयति। देवादीति॥ ॥ ॥

२ समुदायः

प्रत्यक्स्वरूपममृतत्वं ध्रुवमित्यत्र श्रुतिमुदाहरति॥ नेति। अविचाल्यमकार्यमध्रुवेषु सर्वपदार्थेषु कूटस्थममृतत्वं निर्धार्येत्यन्वयः। ब्राह्मणाः ब्रह्मविदः किंचिदपि न कामयंत इत्यत्र हेतुमाह। प्रत्यगात्मेति तात्पर्यार्थमाह॥ पुत्रेति॥ किं धर्मवत्परोक्षत्वेनात घटवत्प्रत्यक्षत्वेन वात्मनोधिगम इत्याकांक्षापूर्वकमुत्तरं व्याचष्टे। यद्विज्ञानादित्यादिना। देहादिविलक्षणविज्ञानस्वभावत्वमात्मनः प्रसिद्धमित्याक्षिपति। नन्विति विजानामीति शब्दादीनीति शेषः। सर्वलौकिकप्रतीतिं दर्शयति। देहादीति। तथा च येनेति प्रसिद्धार्थकयच्छब्दप्रयोगोनुपपन्न इति भावः। यद्यप्यात्मनो लोकतोः विलक्षणत्वप्रसिद्धिस्तथापि विचारकाणां व्यतिरिक्तत्वेनैवात्मस्वरूपप्रसिद्धेर्यच्छब्दविरोधो नास्तीति परिहरति। नेत्यादिना। देहादेर्विज्ञातृत्वाभावे हेतुद्वयमाह। शब्दादीत्यादिना गुणगुणिनोरभेदाच्छब्दादिस्वरूपत्वं संघातस्य द्रष्टव्यं। कार्यकारणसंबंधिनः शब्दा

न कर्मणा वर्द्धते नो कनीयानिति ध्रुवं तदेवंभूतं कूटस्थमविचाल्यममृतत्वं विदित्वा अध्रुवेषु सर्वपदार्थेष्वनित्येषु निर्धार्य ब्राह्मणा इह संसारे अनर्थप्रायेन प्रार्थयंते किंचिदपि प्रत्यगात्मदर्शनप्रतिकूलत्वात्पुत्रवित्तलोकैषणाभ्यो व्युत्तिष्ठंत्येवेत्यर्थः। यद्विज्ञानान्न किंचिदन्यत्प्रार्थयंते ब्राह्मणाः कथं तदधिगम इत्युच्यते। येन विज्ञानस्वभावेनात्मना रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान्मैथुननिमित्तान्सुखप्रत्ययान्विजानाति विस्पष्टं जानाति सर्वो लोकः। ननु नैवं प्रसिद्धिर्लोकस्यात्मना देहादिविलक्षणेनाहं विजानामीति। देहादिसंघातोहं विजानामीति तु सर्वलोकोवगच्छति। न त्वेवं देहादि

थं

> अतो धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयंते॥ येन रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान्॥ एतेनैव विजानाति किमत्र परिशिष्यत एतद्वै तत्॥ ॥

संघातस्यापि शब्दादिस्वरूपत्वाविशेषात् विज्ञेयत्वाविशेषाच्च न युक्तं विज्ञातृत्वं॥ यदि हि देहादिसंघातो रूपाद्यात्मकः सन्रूपादीन्विजानीयात् बाह्या अपि रूपादयो ऽन्योन्यं स्वं स्वं रूपं च विजानीयुः। न चैतदस्ति। तस्माद्देहादिलक्षणांश्च रूपादीनेतेनैव देहादिव्यतिरिक्तेनैव विज्ञानस्वभावेनात्मना विजानाति लोकः। यथा येन लोहो दहति सोग्निरिति तद्वदात्मनोऽविज्ञेयं किमत्रास्मिन्लोके परिशिष्यते न किंचित्परिशिष्यते सर्वमेव त्वात्मना विज्ञेयं यस्यात्मनोऽविज्ञेयं न किंचित्परिशिष्यते स आत्मा सर्वज्ञ एव। एतद्वै तत्। किं तत्। यन्नचिकेतसा पृष्टं देवादिभिरपि विचिकित्सितं धर्मादिभ्योन्यत् विष्णोः परमं पदं

दयः स्वात्मानमन्यं च न जानीयुः शब्दादित्वात्। दृश्यत्वाद्वा घटशब्दादिवत् विपक्षे दोषमाह। यदि हीति॥ एतच्छब्दादेः स्वरूपविज्ञानं नास्तीत्यर्थः फलितमाह। तस्मादिति। लोकः संघातात्माव्यतिरिक्तस्वभावेन संघातस्य विज्ञातृत्वे दृष्टांतमाह। यथेति। येनोष्णप्रकाशात्मना तद्व्यतिरिक्तात्मना संघातो जानातीत्यर्थः। शब्दादिकतिपयविज्ञेयोपादानात्सर्वज्ञत्वमाशंक्याह। आत्मेति। अविज्ञेयमिति छेदः सर्वस्य विज्ञेयत्वे फलितमाह। यस्येति। तत्वविज्ञानमुपसंहरति। एतदिति। तदैक्यविषयमिति प्रकृतमनुद्रवति। यदित्यादिना। यदित्यादिवाक्याभ्यां त्वंपदलक्ष्यनिर्देशोन्यदिति तत्पदलक्ष्यनिर्देशः नास्तीत्यंतेन वाक्यार्थनिर्देशः। वै शब्दः सर्वोपनिषदेकरूपप्रदर्शनार्थः॥ ॥ ॥

विज्ञेयपरिसमाप्तेरुत्तरग्रंथस्य वैयर्थ्यशंकायामाह। अतिसूक्ष्मत्वादिति। आह प्रकारांतरेणेति शेषः। त्रिपुटीसंग्रहार्थमाह। स्वप्नविज्ञेयमिति। एवमुत्तरत्र॥ पूर्ववदिति। यच्छब्दाक्षेप
समाधानादि सर्वं पूर्ववदित्यनूच्यते। महांतं व्यापकं विभुं विविधं भवत्यस्मादिति विभुं सर्वकल्पनाधिष्ठानमित्यर्थः। इति साक्षान्मत्वेति संबंधः साक्षात्कार एव धैर्यं तद्वान्नित्यर्थः। कर्म
फलभोक्तृत्वप्राणादिकलापधारयितृत्वोपलक्षितमात्मानं त्वंपदलक्ष्यं कालत्रयपरिच्छेद्यवस्त्वीशितृत्वोपलक्षितं तत्पदलक्ष्यं यः कश्चिदधिकारी वेद साक्षात्करोति स तस्मादनं
तरमात्मानं नरकपातादिभयान्नरक्षितुमिच्छतीति प्रकारांतरमाह। किंचेति। मधु कर्मफलमत्तीति मध्वदः तमिति व्युत्पत्त्याह। मध्वदमिति। सामीप्यं चात्राभेद अभेदेन वेदेत्यर्थः

अतिसूक्ष्मत्वात् दुर्विज्ञेयमिति मत्वैतमेवार्थं पुनः पुनराह। स्वप्नांतं स्वप्नमध्यं स्वप्नविज्ञेयमित्यर्थः। तथा जागरितांतं जागरितमध्यं जागरितविज्ञेयं चउ १
भौ स्वप्नजागरितांतौ येनात्मनानुपश्यति लोक इति सर्वं पूर्ववत्। तं महांतं विभुं आत्मानं मत्वावगम्यात्मभावेन साक्षादहमस्मि परमात्मेति धीरो न शोचति १
किंच यः कश्चिदिमं मध्वदं कर्मफलभुजं जीवं प्राणादिकलापस्य धारयितारं आत्मानं वेद विजानाति अंतिकादंतिके समीपे। ईशानं ईशितारं भूतभ
व्यस्य कालत्रयस्य ततस्तद्विज्ञानादूर्ध्वमात्मानं न विजुगुप्सते न गोपायितुमिच्छति अभयप्राप्तत्वात्। यावद्धि भयमध्यस्थोऽनित्यमात्मानं मन्यते ता

स्वप्नांतं जागरितांतं चोभौ येनानुपश्यति। महांतं विभुमात्मानं मत्वा धीरो न शोचति। य इमं मध्वदं वेदात्मानं जीवमंतिकात्॥ ईशानं भूतभव्यस्य
न ततो विजुगुप्सत एतद्वै तत्। यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत॥ गुहां प्रविश्य तिष्ठंतं यो भूतेभिर्व्यपश्यत एतद्वै तत्॥ ॥ ॥

वद्गोपायितुमिच्छति आत्मानं। यदा तु नित्यमद्वैतमात्मानं विजानाति तदा किं कः कुतो वा गोपायितुमिच्छेत्। एतद्वैतदिति पूर्ववत्। य प्रत्यगात्मेश्वरभा
वेन निर्दिष्टः स सर्वात्मेत्येतद्दर्शयति। यः कश्चिन्मुमुक्षुः पूर्वं प्रथमं तपसो ज्ञानादिलक्षणाद्ब्रह्मण इत्येतज्जातमुत्पन्नं हिरण्यगर्भं किमपेक्ष्य पूर्वमित्याह
। अद्भ्यः पूर्वं अप्सहितेभ्यः पंचभूतेभ्यो न केवलाभ्योऽद्भ्य इत्यभिप्रायः अजायत उत्पन्नः। यस्तं प्रथमजं देवादिशरीराण्युत्पाद्य सर्वप्राणिगुहां हृदयाकाशं
प्रविश्य तिष्ठंतं शब्दादीननुपलभमानं भूतेभिर्भूतैः कार्यकरणलक्षणैः सह तिष्ठंतं यो व्यपश्यत यः पश्यतीत्येतत्। य एवं पश्यति स एतदेव पश्यति यत्त

कठ भा टी

अरक्षणे हेतुमाह। अभयप्राप्तत्वादिति। उक्तमर्थं व्यतिरेकेणोपपादयति। यावद्धीति। आत्मन इति कर्मणि षष्ठी अन्वयमाह। यदेति। नित्यस्यापि द्वितीयसंबंधाद्भयशंकात
न्नेत्याह। अद्वैतमिति। पूर्ववदिति। यन्नचिकेतसा पृष्टं देवादिभिर्विचिकित्सितं धर्मादिभ्योन्यद्विष्णोः परमं पदं यस्मात्परं नास्ति तद्वा एतदधिगतमित्यर्थः। उत्तरसंदर्भस्य
तात्पर्यमाह। य इति। यः पूर्वं तपसो जातं हिरण्यगर्भं पश्यति स यत्तत्प्रकृतं ब्रह्म। तदेव पश्यतीति संबंधः। आकांक्षापूर्वकं हिरण्यगर्भं विशिनष्टि किमित्यादिना प्रथमजं प
श्यतीत्यन्वयः॥ तस्यैव विशेषणांतरमाह। देवादीति। शब्दादिनुपलभमानमिति। ननु हिरण्यगर्भस्य प्रतिदेहं भोगाभावात्कथं शब्दादीन्नुपलभमानं कथमिति चेद्धिर
ण्यगर्भस्यांतःकरणांशेन जीवोपाधित्वाज्जीवतादात्म्यविवक्षया विशेषणं शब्दादीननुपलभमानमिति भावः॥

२ हिरण्यगर्भस्यैव विशेषणं तदवयवस्याग्नेर्नत्वंस्थापनायेत्याह ॥ किंचेति २



ननु हिरण्यगर्भदर्शनं प्रकृतं ब्रह्मदर्शनं कथमिति चेत्स्वर्णाज्जातं कुंडलं सुवर्णं यथा तद्वद्ब्रह्मणो जातो हिरण्यगर्भोऽपि ब्रह्मात्मक एवेति बोध्यं। हिरण्यगर्भस्यैव विशेषणांतरमाह। किंचेति। अदनाल्लक्षणात्पूर्ववदंतःकरणद्वारा जीवतादात्म्यापन्नत्वाद्गुहायां स्थितिरित्यर्थः। कटुकषायवर्जितं पानं श्लेष्मवातकरभिन्नस्य भोजनमगर्हितं। दार्ष्टांतिकमाह। इत्थमिति। यत्प्रकृतं ब्रह्म तदेतदग्निविराड्रूपमित्यर्थः प्राणाद्धिरण्यगर्भात्सर्वात्मकं ब्रह्मोपसंहरति। तदेतदिति। उ शब्द एवार्थः स्येतीत्यनेन संबध्यते। कश्चिदप्यत्रोपिजनः सुषुप्तौ प्राधान्येन तदात्मकतां जाग्रत्स्वप्नयोस्तत्संबंधितां च गच्छतीत्यर्थः। अथवा फलार्थी ज्ञानेन संभृतकर्मानुष्ठानात्तत्संबंधि हिरण्यगर्भात्मकतां गच्छति निरतिशयपु



किंच यासर्वदेवतामयी सर्वदेवतात्मिका प्राणेन हिरण्यगर्भरूपेण परस्माद्ब्रह्मणः संभवति शब्दादीनामदनाददितिस्तां पूर्ववद्गुहां प्रविश्य तिष्ठंतीमदितिनामेव विशिनष्टि ॥ या भूतेभिर्भूतैः समन्विता व्यजायत उत्पन्नेत्येतत्। किंच योधियज्ञ उत्तराधरारण्योर्निहितः स्थितो जातवेदा अग्निः पुनः सर्वहविषां भोक्ताः अध्यात्मं च योगिभिर्गर्भ इव गर्भिणीभिः अंतर्वत्नीभिः अगर्हितान्नपानभोजनादिना यथा गर्भः सुभृतः सुष्ठु सम्यक् भृतो लोक इव इत्थमेवऋत्विग्भिर्योगिभिश्च सुभृत इत्येतत् किंच दिवे दिवे अहन्यहनि ईड्यः स्तुत्यो वंद्यश्च कर्मिभिर्योगिभिश्चाध्वरे हृदये च जागृवद्भिर्जागरणशीलवद्भिरप्रमत्तैरित्येतत्।

यः प्राणेन संभवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठंतीं या भूतेभिर्व्यजायत एतद्वैतत् ॥ अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ॥ दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निरेतद्वैतत् ॥ यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ॥ तं देवाः सर्वे ऽर्पितास्तदु नात्येति कश्चन एतद्वैतत् ॥ ॥ ॥ ॥

हविष्मद्भिः आज्यादिमद्भिर्ध्यानभावनावद्भिश्च मनुष्येभिर्मनुष्यैरग्निरेतद्वैतत्। तदेव प्रकृतं ब्रह्म किंच। यतश्च यस्मात्प्राणादुदेति उत्तिष्ठति सूर्योऽस्तं निम्लोचनं यत्र यस्मिन्नेव च प्राण अहन्यहनि गच्छति तं प्राणमात्मानं देवा अग्न्यादयोऽधिदैवं वागादयश्चाध्यात्मं सर्वे विश्वे अरा इव रथनाभावर्पिताः संप्रवेशिताः स्थितिकाले सोऽपि ब्रह्मैव तदेतत्सर्वात्मकं ब्रह्म तत् उ नात्येति नातीत्य तदात्मकतां तदन्यत्वं गच्छति कश्चन कश्चिदपि ॥ एतद्वैतत् ॥ यद्ब्रह्मादिस्थावरांतेषु वर्तमानं तत्तदुपाधिकत्वादब्रह्मवदवभासमानं संसार्यन्यत्परस्माद्ब्रह्मण इति माभूत्कस्यचिदाशंकेतीदमाह ॥ ॥ ॥ ॥

रुषार्थी केवलात्मज्ञानेन तदात्मकतां गच्छतीत्यर्थः। एतद्वैतदिति पूर्ववद्व्याख्येयं। ननु सर्वात्मकं ब्रह्मोक्तं तदसत्तत्तदुपाध्यवच्छिन्नचैतन्यस्य संसारित्वात्ब्रह्मणश्चासंसारित्वाद्विरुद्धधर्माक्रांतयोरैक्यायोगादित्याशंकेत यद्ब्रह्मादिष्विति। तत्तदुपाधिकत्वात्स्थावरांतोपाधिमत्वादब्रह्मवदवभासमानं तच्चैतन्यं संसारि स्वपरस्मात्ब्रह्मणोऽन्यदिति संबंधः। उत्तरमाह। माभूदिति। इत्याशंका कस्यचिन्माभूदिति इदं विरुद्धधर्मवत्वस्योपाधिनिबंधनत्वान्न स्वभावे क्येकिंचिदनुपपन्नमित्युत्तरमाहेत्यर्थः। इह जीवे उपाधौ। अवभासमानमिति विशेषण द्वयान्वयि। ननु प्रत्यक्चैतन्यं यच्छब्दवाच्यं विवेकिनां नैवं भासते तत्राह ॥ ॥ ॥ ॥

अविवेकिनामिति। तदेवामुत्रकारणोपाधावित्यन्वयः। ननुविशिष्टजीवचैतन्यस्यकथंतत्पदार्थरूपत्वंतत्राह। स्वात्मस्थमिति। लक्षितमित्यर्थः। ब्रह्मभवतीतिशेषः। व्यतिहारमाह। यच्चेति। अमुष्मिन्कारणोपाधौ। अन्वित्यस्यार्थमाह। अनुविभाव्यमानमिति। अभेददार्ढ्यार्थंभेदनिंदामवतारयति। तत्रेति। जीवेश्वरोपाध्योर्मध्ये। एवंसति तद्गतचैतन्यैकत्वेसति। उपाधिस्वभावश्चभेददृष्टिश्चताभ्यांकारणतयालक्ष्यतद्युपाधिभेददृष्टिलक्षणातया। नह्यंतःकरणाद्युपाधेर्भेददृष्टेश्चानिर्वाच्याविद्यामंतरेणसंभवः कार्यकारणभावस्यसंवित्संबंधस्यचदुर्निरूपत्वादितिभावः। भिन्नदर्शनमनुकरोति। परस्मादिति। नानेवेत्युपमार्थइवशब्दः यथास्वप्नेः नानात्मस्वभावेप्रत्यगात्मनिनानात्वमध्यारोप्यसत्यत्वाभिनिवेशेनव्यवहरतितथाजागरितेपिनानात्वमध्यारोप्यसत्यत्वाभिनिवेशेनयोव्यवहरतितस्यनिंदितत्वादेकरसंब्रह्मास्मीतिप्रतिपत्त

यदेवेहकार्यकरणोपाधिसमन्वितंसंसारधर्मवदवभासमानं अविवेकिनांतदेवस्वात्मस्थंअमुत्रनित्यविज्ञानघनस्वभावंसर्वसंसारधर्मविवर्जितंब्रह्म यच्चामुत्रामुष्मिन्नात्मनिस्थितंतदेवेहनामरूपकार्यकरणोपाधिमनुविभाव्यमानंनान्यत्। तत्रैवंसतिउपाधिस्वभावभेददृष्टिलक्षणयाऽविद्ययामोहितःसन्यइहब्रह्मण्यनानाभूतेपरस्मादन्योहमन्योन्यत्परंब्रह्मेतिनानेवभिन्नमिवपश्यतिउपलभतेसमृत्योर्मरणान्मरणंमृत्युंपुनःपुनर्जननमरणभावमाप्नोति। प्रतिपद्यते। तस्मात्तथानपश्येद्विज्ञानैकरसंनैरंतर्येणाकाशवत्परिपूर्णंब्रह्मैवाहमस्मीतिपश्येदितिवाक्यार्थः॥ प्रागेकत्वविज्ञानादाचा

यदेवेहतदमुत्रयदमुत्रतदन्विह। मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति। मनसैवेदमाप्तव्यंनेहनानास्तिकिंचन। मृत्योःसमृत्युंगच्छतियइहनानेवपश्यति। अंगुष्ठमात्रःपुरुषोमध्यआत्मनितिष्ठति। ॥ ॥ ॥

र्यागमसंस्कृतेनमनसाइदंब्रह्मैकरसमाप्तव्यंआत्मैवनान्यदस्तीति आप्ते चनानात्वप्रत्युपस्थापिकायाअविद्यायानिवृत्तत्वादिहब्रह्मणिनानानास्तिकिंचनाणुमात्रमपि। यस्तुपुनरविद्यातिमिरदृष्टिंनमुंचतिनानेवपश्यतिसमृत्योर्मृत्युंगच्छत्येवस्वल्पमपिभेदमध्यारोपयन्नित्यर्थः पुनरपितदेवप्रकृतंब्रह्माह। अंगुष्ठमात्रअंगुष्ठपरिमाणः अंगुष्ठपरिमाणं हृदयपुंडरीकंतच्छिद्रवर्त्यंतःकरणोपाधिरंगुष्ठमात्रः अंगुष्ठमात्रवंशपर्वमध्यवर्त्यंबरवत्पुरुषःपूर्णमनेनसर्वमिति॥ मध्यआत्मनिशरीरेतिष्ठतियस्तमात्मानंईशानंभूतभव्यस्यविदित्वानततइत्यादिपूर्ववत्॥ ॥ ॥ ॥

व्यमित्यर्थः। मरणग्रहणमुपलक्षणमितिव्याचष्टे। पुनःपुनरिति। एकरसंचेतब्रह्मकथंज्ञातृज्ञेयविभागइत्याशंक्याज्ञप्रतिकल्पितभेदेनेत्याह प्रागेकत्वविज्ञानादिति। इतियस्मान्नान्यदस्तितस्माद्ब्रह्मैवेत्यन्वयः। ज्ञानानंतरंफलमाह। आप्तेचेतिनानादर्शननिंदामुपसंहरति। यस्त्विति। अंगुष्ठपरिमाणंजीवमनूद्यब्रह्मभावविधानाद्बुधीयमानविरोधादंगुष्ठमात्रत्वस्यचाविवक्षितत्वाद्ब्रह्मपरमेववाक्यमित्याह। पुनरपीति। तस्यपुंडरीकस्यछिद्रंतत्प्राधान्येनाधारमस्येतितच्छिद्रवदंतःकरणमुपाधिर्यस्यसतथोक्तः। उपाधिप्रयुक्तमात्मनोंगुष्ठमात्रत्वमित्यत्रदृष्टांतमाह। अंगुष्ठमात्रेति। अंगुष्ठपरिमितवेणुवर्त्याकाशस्योपाधिवशादंगुष्ठपरिमाणत्वंयथातद्वदात्मनइत्यर्थः॥

प्रत्यगात्मानमनूद्य तस्य साम्मानाधिकरण्यलब्धतत्पदलक्ष्यस्वरूपतामाह। य इति। ततस्तद्विज्ञानादूर्ध्वमात्मानं न गोपायितुमिच्छतीत्यभयस्य प्राप्तत्वादिति व्याख्यानं ततद्-
त्यादेः पूर्ववदित्याह नततइति। नायमस्तीति द्वितीयपक्षस्योत्तरत्वेनोत्तरं वाक्यमवतारयति किंचेति। युक्तं पठनमिति शेषः। तत्र हेतुमाह। ज्योतिरिति। परत्वाद्विशेषण-
त्वादित्यर्थः। यः प्रत्यगात्मा भूतभव्यस्येशानः सन् लक्षितइत्यन्वयः। उरप्यर्थे व्याख्यातः। एवकारार्थमाह। नान्यइति यदर्थं वाक्यमवतारितं तमाह। अनेनेति। नन्वस्य क्ष-
तहानाकृताभ्यागमादिदोषात्प्राप्तिरेव नेत्यत आह। न्यायतइति प्रत्यक्तः दार्ढ्यार्थमिति शेषः प्रयुक्त इति अन्वयार्थश्चकारः। पौनरुक्त्यं परिहरन् संबंधमाह। पुनरपीति। उ

किञ्च अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः अधूमकमिति युक्तं ज्योतिःपरत्वात् यस्त्वेवं लक्षितो योगिभिर्हृदय ईशानो भूतभव्यस्य स नि-
त्यः कूटस्थोऽद्येदानीं प्राणिषु वर्तमानः स उ श्वोपि वर्तिष्यते नान्यस्तत्समोन्यश्च जनिष्यतइत्यर्थः। अनेन नायमस्तीति चैकइत्ययं पक्षो न्याय-
तः प्राप्तोपि स्ववचनेन श्रुत्या प्रत्युक्तः। तथा क्षणभंगवादश्च। पुनरपि भेददर्शनापवादं ब्रह्मण आह। यथोदकं दुर्गे दुर्गमे देशे उच्छ्रिते वृष्टं सिक्तं
पर्वतेषु पर्वतवत्सु निम्नप्रदेशेषु विधावति विकीर्णं सद्विनश्यति एवं धर्मान्नात्मनो भिन्नान् पृथक् पश्यन् पृथगेव प्रतिशरीरं पश्यंस्तानेव शरी-

ईशानं भूतभव्यस्य न ततो विजुगुप्सते एतद्वै तत्। अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य स ए-
वाद्य स उ श्व एतद्वै तत्। यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति। एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति। यथोदकं शुद्धे
शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम॥ ॥ इति कठवल्ल्यां द्वितीयाध्याये प्रथमवल्ली समाप्ता॥ ॥

रभेदानुवर्तिनोनुधावति शरीरभेदमेव पृथक् पुनः पुनः प्रतिपद्यतइत्यर्थः। यस्य पुनर्विद्यावतो विध्वस्तोपाधिकृतभेददर्शनस्य विशुद्धविज्ञानैक-
घनरसमद्वयमात्मानं पश्यतो विजानतो मुनेर्मननशीलस्यात्मा स्वरूपं कथं भवतीत्युच्यते। यथोदकं शुद्धे प्रसन्ने शुद्धं प्रसन्नमासिक्तं प्रक्षिप्तमेक-
रसमेव नान्यथा तादृगेव भवति आत्मापि एवमेव भवत्येकत्वं जानतो मुनेर्मननशीलस्य हे गौतम। तस्मात्कुतार्किकभेददृष्टिं नास्तिककुदृष्टिं चोज्झि-
त्वा मातृपितृसहस्रेभ्योपि हितैषिणा वेदेनोपदिष्टमात्मैकत्वदर्शनं शान्तदर्पैरादरणीयमित्यर्थः॥ इति कठोपनिषद्भाष्ये द्वितीयाध्याये चतुर्थवल्ली समाप्ता

च्छ्रितेउन्नते। दधतइति धर्मादित्याह॥ आत्मनइति॥ अनुधावतीत्यस्य तात्पर्यार्थमाह॥ शरीरेति॥ यथोदकं शुद्ध इति वाक्यमपेक्षितं पूरयन् व्याचष्टे। यस्येत्यादिना॥
उपाधिरविद्यादिः॥ सम्पूर्णवल्ल्यास्तात्पर्यार्थमाह॥ तस्मादिति॥ यस्माद्बहुशो भेदो निंदितस्तस्मादित्यर्थः॥ नास्तिकभेददृष्टिः क्षणिकविज्ञानात्मसंतानात्मभेददृष्टिः॥
तां सर्वापेक्ष्यापि पित्रोर्हिततत्त्वत्वं प्रसिद्धं श्रुतितोन्यस्य सम्भाव्यितैषित्वं नेति श्रुत्युक्तमद्वैतदर्शनमेवादरणीयं श्रद्धाभक्तिभ्यामित्यर्थः॥ ॥ इति कठोपनिष-
द्भाष्ये चतुर्थवल्लीविवरणं समाप्तम्॥

नन्वेवंनेकप्रकारमात्मतत्त्वंप्रतिपादितंकिमर्थमुत्तरवल्ल्यारंभइतिचेदात्मतत्त्वस्यदुर्विज्ञेयत्वात्प्रकारांतरेणतदुक्तिरितिपौनरुक्त्यंपरिहरन्संबंधमाह।पुनरपीति।भूयोपिप
थ्यंवक्तव्यमितिन्यायेनउपायांतरेणापिब्रह्मज्ञाप्यतेतत्रोपायाएवभिद्यंतेनोपेयस्यभेदोस्तीतिभावः।अक्षराणिव्याचष्टे।पुरमिति।पुरंशरीरमितिसंबन्धः।पुरसादृश्यमाह॥
द्वारेति।दृष्टांतेद्वारपालाभटाःतेषामधिष्ठातारोऽधिपतयोआदिशब्देनमंत्रिबंदिसप्तप्राकारयंत्राट्टालिकादिर्गृह्यते।दार्ष्टांतिकेतुमूर्द्धनाभिसहितचक्षुःश्रोत्रनासिकामुख
घोरंध्राणिद्वाराणिद्वारपालाश्चक्षुरादीन्द्रियाणिनाभेःसमानःमूर्ध्नःप्राणस्तेषामधिष्ठातारोदिग्वातादयआदिशब्देनत्वङ्मांसरुधिरमेदोमज्जास्थिस्नायवःप्राकारसदृशाःमू
लाधाराःज्ञानान्यट्टालिकासदृशानिसंधयोयंत्राणिरोमाणिप्राकारोपरिस्थितविशारवसदृशानीत्यादिद्रष्टव्यं।शरीरस्यपुरत्वरूपकोक्तेःप्रयोजनमाह।पुरत्वेति।स्वात्मनापुरेण
संहतत्वंस्वामिनःपुरोपचयापचयाभ्यामुपचयापचयराहित्यंपुरसत्ताप्रतीतिमंतरेणसत्ताप्रतीतिमत्त्वंस्वातंत्र्यं॥तथेति॥यथापुरेणासंहतःस्वतंत्रोयःस्वामीतच्छेषतयापुरंद

पुनरपिप्रकारांतरेणब्रह्मतत्त्वनिर्धारणार्थेयमारभ्यतेदुर्ज्ञेयत्वाद्ब्रह्मणःपुरंपुरमिवपुरंद्वारपालाधिष्ठात्राद्यनेकपुरोपकरणसंपत्तिदर्शनाच्छरीरंपुरंपुरं
चसोपकरणंस्वात्मनाऽसंहतस्वतंत्रस्वाम्यर्थंदृष्टंतथेदंपुरसामान्यादनेकोपकरणसंहतंशरीरंस्वात्मनाऽसंहतराजस्थानीयस्वाम्यर्थंभवितुमर्हति।तच्चे
दंशरीराख्यंपुरमेकादशद्वारंएकादशद्वाराण्यस्यसप्तशीर्षण्यानिनाभ्यासहार्वांचित्रीणिशिरस्येकंतैरेकादशद्वारंपुरंकस्याजस्यजन्मादिविक्रियारहितस्य।

॥ॐ॥पुरमेकादशद्वारमजस्यावक्रचेतसः।अनुष्ठायनशोचतिविमुक्तश्चविमुच्यतएतद्वैतत्॥

त्मनोराजस्थानीयस्यपुरधर्मविलक्षणस्यअवक्रचेतसःअवक्रमकुटिलंआदित्यप्रकाशवन्नित्यमेवावस्थितमेकरूपंचेतोविज्ञानमस्येतिअवक्रचेताःतस्याव
क्रचेतसोराजस्थानीयस्यअजस्यब्रह्मणोयस्येदंपुरंतंपरमेश्वरंपुरस्वामिनंअनुष्ठायध्यात्वाध्यानंहितस्यानुष्ठानंसम्यग्विज्ञानपूर्वकंतंसर्वैषणाविनिर्मुक्तःसन्
समंसर्वभूतस्थंध्यात्वानशोचतितद्विज्ञानादभयप्राप्तेःशोकावसराभावात्कुतोभयेक्षा इहैवाविद्याकृतकामकर्मबंधनैर्विमुक्तोभवतिविमुक्तश्चसन्विमुच्यते।

ष्टंतथापुरसादृश्यादनेकोपकरणसहितंप्रत्यक्षंशरीरंशरीरेणासंहतःराजस्थानीयःस्वतंत्रोयःस्वामीतदर्थंभवितुमर्हतीत्यर्थः।तत्स्वाम्यर्थंविशेषणसमुच्चयार्थश्चकारः।विशेष
णमेवव्याचष्टे।एकादशेति।पुरस्वामिनमाकांक्षापूर्वकंसविशेषंसन्निर्दिशति।कस्येति।जन्मादीति।षड्भावरहितस्येत्यर्थः।दृष्टांतेराज्ञोऽवक्रचेतस्त्वंसर्वप्रकृत्यनुकूलत्वंप्रकृते
तुयथासवितास्वाविनाभूतप्रकाशवानित्युच्यतेतथाजन्मादिरहिताखंडरूपेणावस्थितनित्यविज्ञप्तिरूपत्वमित्याह।अवक्रमित्यादिना।अनुष्ठायेत्यादिवाक्यमपेक्षितंपूरयन्व्या
चष्टे।यस्येतिनन्वपुरस्वामिनोजीवत्वात्तस्येश्वरत्वनिर्देशःकथमितिचेदजस्येतिजीवस्यावक्रचेतसइतीश्वरत्वनिर्देशात्सामानाधिकरण्यादभेदेप्रत्यगभिन्नेश्वरस्यपुरस्वामी
त्वनिर्देशोघटतइतिभावः।आत्मनःक्रियाविषयत्वाभावादनुष्ठानमात्मनिध्यानमेवयोग्यतावशादित्याह।ध्यानंहीति।सम्यग्विज्ञानपूर्वकमित्यप्रतिबद्धापरोक्षसाक्षात्काररूपं
विज्ञानंपूर्वमुद्देश्यंयस्यतत्तथाअन्यथासम्यग्विज्ञानानंतरंध्यानायोगात्साक्षात्कारार्थत्वेध्यायतेर्लक्षणार्थत्वापत्तेस्तद्विज्ञानादभयप्राप्तिरित्युत्तरभाष्यविरोधादित्यधिकारिणंनि

४नियसंबंधः

भयेऽप्यभयस्य दर्शनमित्यर्थः। विमुक्तश्च विमुच्यत इति पदयोः पौनरुक्त्यं परिहरति। इहैवेति॥ ननु पुरमिति विशेषणादेकपुरवर्तित्वमुक्तं तथात्वे परिच्छिन्नत्वापत्तिरित्याशंक्याकांक्षापूर्वकमुत्तरमवतारयति। सत्त्विति। तुशब्देनाशंकानिवर्त्यते। हंसः सन्नित्युत्तरेष्वपि द्रष्टव्यमिति व्युत्पत्त्याशुचिषदादित्यः सन्नात्मेत्यर्थः। ननु वेदिशब्देन चतुरंगुलखाता भूमिरुच्यते कथं पृथिव्यभिधीयते तत्राह इयमिति या यज्ञे प्रसिद्धा इयं वेदिः पृथिव्याः परोंऽतः परः स्वभाव इति वेद्याः पृथिवीस्वभावत्वकीर्तनात् पृथिवी वेदिशब्दवाच्या भवतीत्यर्थः सोमरसाधारबृहत्पात्रं द्रोणकलशशब्देनोच्यते। अतिथिशब्दस्य रूढ्यर्थमादायार्थांतरमाह। ब्राह्मण इति। इति दुरोणसदित्यन्वयः। इति वरसदित्यन्वयः एवमुत्तरत्र ननु सर्वात्मत्वे सप्रपंचत्वेन मिथ्यात्वं स्यादात्मन इत्याशंक्याह। सर्वेति। पारमार्थिकनिरतिशयस्वभावमेवेत्यत्र हेतुः। बृहदिति। तत्र हेतुः। सर्वेति निरधिष्ठानभ्रमायोगात् द्वैतभ्र

पुनः शरीरं न गृण्हातीत्यर्थः। स तु नैकपुरवर्त्येवात्मा किं तर्हि सर्वपुरवर्ती। कथं हंसो हंति गच्छतीति शुचिषत् शुचौ दिव्यादित्यात्मनासीदतीति वसुर्वासयति सर्वानिति वाय्वात्मनांऽतरिक्षे सीदतीति अंतरिक्षसत् होताग्निः अग्निर्वै होतेति श्रुतेः वेद्यां पृथिव्यां सीदतीति वेदिषत् इयं वेदिः परोंऽतः पृथिव्या इत्यादिमंत्रवर्णात्। अतिथिः सोमः सन् दुरोणे कलशे सीदतीति दुरोणसत्। ब्राह्मणोऽतिथिरूपेण वा दुरोणेषु यज्ञगृहेषु सीदतीति। नृषत् नृषु मनुष्येषु सीदतीति नृषत्॥ वरसत् वरेषु देवेषु सीदतीति। ऋतसत् ऋतं सत्यं यज्ञो वा तस्मिन् सीदतीति। व्योमसत् व्योम्न्याकाशे सीदतीति। अब्जा अप्सु शंखशुक्तिमकरादिरूपेण जा

हंसः शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा
गोजा ऋतजा अद्रिजा ऋतं बृहत्। ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति॥ ॥ ॥

यत इति गोजाः गवि पृथिव्यां व्रीहियवादिरूपेण जायत इति। ऋतजा यज्ञांगरूपेण जायत इति। अद्रिजाः पर्वतेभ्यो नद्यादिरूपेण जायत इति। सर्वात्मापि सन् ऋतमवितथस्वभाव एव बृहत्। महान् सर्वकारणत्वात् यदाप्यादित्य एव मंत्रेणोच्यते तदाप्यात्मस्वरूपत्वमादित्यस्यांगीकृतत्वाद्ब्राह्मणो व्याख्यानेप्यविरोधः। सर्वव्याप्येक एवात्मा जगतो नात्मभेद इति मंत्रार्थः॥ आत्मनः स्वरूपाधिगमे लिंगमुच्यते। ऊर्ध्वं हृदयात्प्राणं प्राणवृत्तिं वायुमुन्नयति ऊर्ध्वं गमयति तथापानं प्रत्यगधोऽस्यति क्षिपति य इति वाक्यशेषः॥

माधिष्ठानभूतात्मनो न मिथ्यात्वमिति भावः। नन्वसौ वा आदित्यो हंसः शुचिषदित्यादित्यो मंत्रार्थतया व्याख्यातः कथं तर्हि रूढमिदं व्याख्यातमित्याशंक्याह। यदाप्यादित्य एवेति अस्यादित्यस्येति संबंधः सूर्य आत्मा जगतस्तस्थुषश्चेति मंत्रवर्णात्। मंडलोपलक्षितचिद्धातोरिष्यत एव सर्वात्मत्वमित्यर्थः॥ सर्वव्यापीति प्रतीच्यः केवलस्य मंडलोपलक्षितचैतन्यस्य वा मंत्रार्थत्वमित्यर्थः॥ येयं प्रेत इत्यापूर्वं विचिकित्साप्रश्नमूलत्वेनोद्भाविता सापि निर्मूलेत्येतद्दर्शयितुं देहव्यतिरिक्तास्तित्वमात्मनः साधयति। आत्मनः स्वरूपाधिगम इत्यादिना॥ बुद्धेः प्राधान्येन हृदयाकाशवृत्तित्वात्तत्राभिव्यक्त आत्मासीन इत्युच्यत इत्याह॥ ॥ ॥ ॥

हृदयेति संभजनीयं मुमुक्षुभिरिति शेषः। उपासत इत्यस्य तात्पर्यार्थमाह॥ तादर्थ्येनेति। आत्मार्थत्वेनानुपरतव्यापाराः कार्याभिव्यक्तिकाल इति शेषः। यदर्था इत्यनेनानुमानं सूचितं तथा हि सर्वे प्राणकरणव्यापाराः स्वेतरार्थास्तत्प्रयुक्ताश्च भवितुमर्हन्ति जडचेष्टात्वाद्रथादिचेष्टावदिति। अन्यः प्राणेभ्य इति शेषः। करणव्यतिरेकं साधयित्वा कार्यव्यतिरेकमाह॥ किं चेति। पौनरुक्त्यं परिहरति विस्रंसनेति। विमुच्यमानस्य प्रारब्धक्षयं इति शेषः। प्राणादिकलापइति कार्यकरणसंघात इत्यर्थः। यथा पुरस्वामिनो राज्ञोऽपगमे पुरवासिनो जना अन्यत्रापगच्छन्तीति तद्वत्प्राणादय इति दृष्टान्तेनात्मनो व्यतिरेकं साधयति अत्र देह इत्यादिना॥ हतबलमिति। चेतनाचेतन्यस्य सामान्यवृत्तिः संघातस्य बलं तच्छून्यमित्यर्थः॥ अत एवाधःपततीत्याह विध्वस्तमिति। अनेनेदमनुमानं सूचितं शरीरं चेतनशेषं तद्विगमे भोगानर्हत्वात् राजपुरवदिति॥ हेतोरन्यथासिद्धिं शंकते स्यान्मतमिति। तद्युति

तं मध्ये हृदयपुंडरीकाकाशे आसीनं बुद्धावभिव्यक्तविज्ञानप्रकाशनं वामनं संभजनीयं सर्वे विश्वेदेवाश्चक्षुरादयः प्राणा रूपादिविज्ञानं बलिमुपाहरन्तो विशइव राजानमुपासते तादर्थ्येनानुपरतव्यापारा भवन्तीत्यर्थः। यदर्था यत्प्रयुक्ताश्च सर्वे वायुकरणव्यापाराः सोऽन्यः सिद्ध इति वाक्यार्थः॥ किंच। अस्य शरीरस्थस्यात्मनो विस्रंसमानस्य भ्रंशमानस्य देहिनो देहवतः विस्रंसनशब्दार्थमाह देहाद्विमुच्यमानस्येति किमत्र परिशिष्यते। प्राणादिकलापो न किंचन परिशिष्यते अत्र देहे। पुरस्वामिविद्रवणइव पुरवासिनां यस्यात्मनोऽपगमे क्षणमात्रात्कार्यकारणकलापरूपं सर्वमिदं हतबलं विध्वस्तं भवति विनष्टं

मध्ये वामनमासीनं विश्वेदेवा उपासते॥ अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः॥ देहाद्वि
मुच्यमानस्य किमत्र परिशिष्यत एतद्वैतत्॥ न प्राणेन नापानेन मर्त्यो जीवति कश्चन॥ ॥

शंकते

भवति सोऽन्यः सिद्धः। स्यान्मतं प्राणापानाद्यपगमादेवेदं विध्वस्तं भवति न तु तद्व्यतिरिक्तात्मापगमात्प्राणादिभिरेवह्ययं मर्त्यो जीवतीति नैतदस्ति। न प्राणेन नापानेन चक्षुरादिना वा मर्त्यो मनुष्यो देहवान्कश्चन जीवति न कोऽपि जीवति॥ न ह्येषां परार्थानां संहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते स्वार्थेनासं हतेन परेण केनचिदप्रयुक्तं संहतानामवस्थानं न दृष्टं गृहादीनां लोके तथा प्राणादीनामपि संहतत्वाद्भवितुमर्हति ॥ रिक्ते इति शब्दः प्राणादिव्यतिरिक्तार्थः। अन्वयमुक्त्वा व्यतिरेकमाह। प्राणादिभिरेवेति लोकप्रसिध्यर्थको हिशब्दः शंकासमाप्तिद्योतक इतिशब्दः। शंकोत्तरत्वेन वाक्यं योजयति। नैतदिति। एतत्प्राणाद्यपगमाच्छरीरस्य हतबलत्वं प्राणेनापानेन वा न जीवति चेच्चक्षुरादिना जीविष्यतीत्याशंक्य तयोर्ग्रहणमुपलक्षणार्थमित्याह। चक्षुरादिनेति। न जीवतीत्यत्र हेतुमाह। न हीति संहत्य मिलित्वा कारित्वात्कार्यजनकत्वाच्चैतन्यसंबंधमंतरेण न जीवनहेतुत्वसंभव इत्यर्थः। जीव प्राणधारण इति धातुस्मरणाच्छरीरस्य जीवनं नाम प्राणधारणं तत्संयोगश्च धारणं कुंडे दधिधारणवत् तत्र प्राणस्यैव हेतुत्वं कथमुच्यते जीवनहेतुत्वं प्राणादीनां न संभवतीति तत्राह। स्वार्थेनेति। स्वप्रयोजनोद्देशेनेत्यर्थः। असंहतेनग्रहपदार्थाप्रविष्टेन संहतानां संघातापत्तिं प्राप्तानां दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह। तथेति कादाचित्कस्य प्राणशरीरसंयोगस्य स्वभावतोऽनुपपत्तेः संघातस्य च लोके परप्रयुक्तस्य दर्शनाद्भवितव्यमन्येन संघातस्य प्रयोजकेनेत्यर्थः।

अतद्दूतिसंहतत्वंपरामृश्यते। उपाश्रितपदस्यार्थकथनपूर्वकंतात्पर्यार्थमाह। यस्येति। असंहतःसन्प्राणापानादिरित्यन्वयः। येयंप्रेतइतिप्रश्नःपरलोकास्तित्वेपिसंदेहभा
सीद्विशेषतस्तन्निवृत्यर्थमुच्यतेइत्याह। हंतेदानीमितिजीवःसंसरतीत्यर्थेचशब्दार्थहेतुंव्याचष्टे। यद्विज्ञानादिति। यस्याविज्ञानादितिसंबंधः। अविद्यावत्वाद्विवेकिनइ
त्याह। मूढाइतिदेहिनइतिविशेषणादसकृद्देहग्रहणंतत्साधककर्मानुष्ठानंचसूच्यते। तात्पर्यार्थमाह। योनिमिति। असंताःधमाइतिमहापातकिनोगृह्यंते। अनुगच्छंतीतिप्रा
प्नुवंतीत्यर्थः। उक्तमर्थस्पष्टयति। यैरितिविज्ञानमुपासनंनग्नस्त्रीदर्शनादिच॥ यथाविज्ञानंशरीरग्रहणेप्रमाणमाह। यथेति। प्रज्ञामनतिक्रम्ययथाप्रज्ञंसंभवंत्युत्पद्यंतेइ



अतद्इतरेणैवसंहतप्राणादिविलक्षणेनतुसर्वेसंहताःसंतोजीवंतिप्राणान्धारयंति। यस्मिन्संहतविलक्षणआत्मनिसतिपरस्मिन्नेतौप्राणापानौच
क्षुरादिभिःसंहताउपाश्रितौ यस्यासंहतस्यार्थेप्राणापानादिःस्वस्वव्यापारंकुर्वन्वर्त्ततेसंहतःसन्सततोन्यःसिद्धइत्यभिप्रायः। हंतेदानींपुनरपितेतुभ्यमिदं
गुह्यंगोप्यंब्रह्मसनातनंचिरंतनंप्रवक्ष्यामि यद्विज्ञानात्सर्वसंसारोपरमोभवति अविज्ञानाच्चयस्य मरणंप्राप्ययथात्माभवतियथासंसरतितथाशृणु
हेगौतम। योनिंयोनिद्वारंशुक्रबीजसमन्विताःसंतोऽन्येकेचिदविद्यावंतोमूढाःप्रपद्यंतेशरीरत्वायशरीरग्रहणार्थंदेहिनोदेहवंतोयोनिंप्रविशंतीत्यर्थः

इतरेणतुजीवंतियस्मिन्नेतावुपाश्रितौ॥ हंततइदंप्रवक्ष्यामिगुह्यंब्रह्मसनातनं॥ यथाचमरणंप्राप्यात्माभवति
गौतम॥ योनिमन्येप्रपद्यंतेशरीरत्वायदेहिनः॥ स्थाणुमन्येऽनुसंयंतियथाकर्मयथाश्रुतं॥ यएषसुप्तेषुजागर्तिका
मंकामंपुरुषोनिर्मिमाणः। तदेवशुक्रंतद्ब्रह्मतदेवामृतमुच्यते। तस्मिंल्लोकाःश्रिताःसर्वेतदुनात्येतिकश्चनएतद्वैतत्॥

स्थाणुंवृक्षादिस्थावरभावंअन्येअत्यंताधमामरणंप्राप्यानुसंयंति अनुगच्छंतियथाकर्मयद्यस्यकर्मतद्यथाकर्मयैर्यादृशंकर्मेहजन्मनिकृतंतद्वशेनेत्येत
त्। तथाचयथाश्रुतंयादृशंचविज्ञानमुपार्जितंतदनुरूपमेवशरीरंप्रतिपद्यंतइत्यर्थः। यथाप्रज्ञंहिसंभवाइतिश्रुत्यंतरात्। यत्प्रतिज्ञातंगुह्यंब्रह्मवक्ष्यामी
तितदाह यएषसुप्तेषुप्राणादिषुजागर्त्तिनस्वपिति। कथंकामंकामंतंतमभिप्रेतंस्त्र्याद्यर्थंअविद्ययानिर्मिमाणोनिष्पादयन्जागर्त्तिपुरुषोयस्तदेवशुक्रंशुभ्रंशु
द्धंतद्ब्रह्मनान्यद्गुह्यंब्रह्मास्ति तदेवामृतमविनाश्युच्यतेसर्वशास्त्रेषु किंचपृथिव्यादयोलोकास्तस्मिन्नेव सर्वेब्रह्मण्याश्रिताःसर्वलोककारणत्वात्तस्य। तदुनात्ये

तिसंभवाःप्रजाइतिशेषः। प्रसंगादागतंपरिसमाप्यप्रकृतप्रतिपादनपरमुत्तरंवाक्यमित्याह। यत्प्रतिज्ञातमिति। सुप्तेषुप्रलीनेषुप्राणेष्वंतःकरणव्यतिरिक्तेषु। अन्यथासा
क्षिणःसन्निधिमात्रेणकामाद्याकारपरिणाम्यंतःकरणप्रेरणानुपपत्तेरितिकाम्यतइतिकामस्तमविद्ययानिद्रांतःकरणरूपेणाभिव्यक्तया यइत्यन्वयार्थंपुनरुच्यते। तद्ब्र
ह्मेत्यत्रैवकारानुषंगसिद्धवत्कृत्यव्यावर्त्यमाह। नान्यदिति। स्वप्नावस्थायामतिस्फुटंसाक्षिणःसकाशादन्यद्भिन्नंगुह्यंगोप्यतमंब्रह्मपरिदृढंनास्तीत्यर्थः। तद्ब्रह्माविनाशीतिको
च्यतइत्याकांक्षायामाह। सर्वेति। सर्ववेदेष्वित्यर्थः। भूरादिलोकानांप्रकृतब्रह्माश्रितत्वेहेतुमाह। सर्वलोकेति। पूर्ववदिति। तदेतत्सर्वात्मकंब्रह्मउएवनात्येतिनातिक्रमतीत्यर्थः॥ ॥

ननुजन्ममरणकरणानांप्रतिप्राणिनियमात्युगपत्तेषामप्रवृत्तेश्चपुरुषबहुत्वंसिद्धंसत्वरजस्तमोगुणानांवैपरित्याच्चनानात्मानोव्यवस्थिताइत्यनेकतार्किकबुद्धिविरोधात्सर्व
पुरवर्त्येकआत्मेत्यत्रनचित्तस्थैर्यसंभवतीत्याशंक्योपाधिकभेदसाधनेसिद्धसाधनत्वंस्वभावभेदसाधनेचानैकांतिकत्वंदर्शयितुंप्रक्रमतइत्याह।अनेकतार्किकेत्यादिना।अने
केकुतार्किकाःपाखंडाश्चतर्कागमावष्टंभास्तदधीनायाबुद्धिस्तयाआकलितमाकुलितमंतःकरणंयेषांतेतथातेषामित्यर्थः।अनेकतार्किककुबुद्धिविचालितांतःकरणानामिति
पाठेतार्किकाएवकुबुद्धयः।तैःस्वमतोपन्यासादिनाविचालितंश्रेयोमार्गादंतःकरणंयेषांतेतथातेषामित्यर्थःप्रमाणोपपन्नंतत्त्वमस्यादिवाक्यप्रतिपाद्यंप्रत्यकूब्रह्मैक्यरूप
विज्ञानमात्मैकत्वविज्ञानं।प्रमाणेअभ्यासादिलिंगसाहित्यंदर्शयति।असकृदिति।अनृजुबुद्धीनामिति पूर्वषष्ठ्यर्थेहेतुः।नाधीयतेसम्यग्विज्ञानात्मकवृत्त्यारूढंनभवतीत्य
र्थः।ऋजुबुद्धीनांब्राह्मणानांचेतसीवेतिपाठोव्यतिरेकदृष्टांतार्थः।तत्प्रतिपादनेविद्वत्सिस्वभावप्रत्यग्ब्रह्मप्रतिपादनेआदरवतीतात्पर्यवती॥दाह्यभेदंकाष्ठादिविशेषंप्रति

अनेकतार्किककुबुद्धिविचालितांतःकरणानांप्रमाणोपपन्नमपिआत्मैकत्वविज्ञानमसकृदुच्यमानमपिअनृजुबुद्धीनांब्राह्मणानांचेतसिनाधीयतइ
तितत्प्रतिपादनेआदरवतीपुनःपुनराहश्रुतिः॥अग्निर्यथाएकएवप्रकाशात्मासन्भुवनंभवंत्यस्मिन्भूतानीतिभुवनमयंलोकस्तमिमंप्रविष्टः।अनुप्र
विष्टःरूपंरूपंप्रतिदार्वादिदाह्यभेदंप्रतीत्यर्थः।प्रतिरूपस्तत्रतत्रप्रतिरूपवान्दाह्यभेदेनबभूवएकएवतथासर्वभूतांतरात्मासर्वेषांभूतानांअभ्यंतरआ

अग्निर्यथैकोभुवनंप्रविष्टोरूपंरूपंप्रतिरूपोबभूव॥एकस्तथासर्वभूतांतरात्मारूपंरूपंप्रतिरूपोबहि ९
श्च॥वायुर्यथैकोभुवनंप्रविष्टोरूपंरूपंप्रतिरूपोबभूव।एकस्तथासर्वभूतांतरात्मारूपंरूपंप्रतिरूपोबहिश्च।

त्मातिसूक्ष्मत्वाद्दार्वादिष्विवसर्वदेहंप्रतिप्रविष्टत्वात्प्रतिरूपोबभूवबहिश्चस्वेनाविकृतेनरूपेणावसत्।तथान्योदृष्टांतोवायुर्यथैकइत्यादि।प्राणा
त्मनादेहेष्वनुप्रविष्टोरूपंरूपंप्रतिरूपोबभूवेतिसमानं॥एकस्यसर्वात्मत्वेसंसारदुःखित्वंपरस्यैवतदितिप्राप्तेइदमुच्यते॥ ॥ ॥ ॥ ॥

रूपइति।उपाधिरूपेणप्रतीयमानश्चतुष्कोणत्वादिधर्मकेइदारूणितद्रूपोवन्हिरपिलक्ष्यतइत्यर्थः।तत्रतत्रदार्वादौदाह्यभेदेनदार्वादिविशेषेणदृष्टांतमुक्त्वादार्ष्टांतिकमा
ह।एकएवेति।अभ्यंतरत्वेअतिसूक्ष्मत्वंहेतुः।सदृष्टांतंरूपंरूपमित्यादिव्याचष्टे।दार्वादिष्विवेत्यादिना॥रूपंरूपमित्यस्यसर्वदेहमितिव्याख्यानंविकारेप्रविष्टस्यविकृतिमा
शंक्यबहिश्चेतिपदेनपरिहारइत्याहबहिश्चेतिस्वेनाविकृतेनस्वरूपेणासंस्पृष्टस्वरूपेणेत्यर्थः।वायोरस्मिन्लोकेकथंप्रवेशोदार्वादिष्वनुपलंभादित्याशंक्याहप्राणात्मने
तिइत्यादिसमानमितिएकस्तथेत्यादिवाक्यव्याख्यानंपूर्ववदित्यर्थः॥ ननुपरमात्मादुःखीस्याद्दुःखव्यभिन्नत्वाल्लोकवदित्याह।एकस्यसर्वात्मत्वइति।तमेवपरमात्मानमे
वपरस्यैवेत्यपिपाठः इदमुच्यतेदृष्टांतपूर्वकमुत्तरमुच्यते।अविद्यायांप्रतिबिंबितश्चिद्धातुरजीवोभवतिश्री तश्चकामादिदोषप्रयुक्तःकर्मकुरुतेतन्निमित्तंतद्दुःखंस्वा
त्मन्यध्यवस्यतिपरमात्मातुविरवद्यत्वाद्दुःखसाधनशून्यत्वान्नदुःखीततोऽप्रयोजकोहेतुरित्याह॥ ॥ ॥ ॥ ॥ ९ ॥

लोकोह्यविद्ययेतिस्वरूपेणभ्रमाविषयत्वंविपरितबुद्ध्यध्यासबाह्यत्वंरज्ज्वादीनांयथातथाचैतन्यस्याप्युपाधिस्थतारूपेणाध्यासाश्रयत्वेपिनिरुपाधिकबिंबकल्पब्रह्मरूपेणा ध्यासानाश्रयत्वान्नदुःखितत्वप्राप्तिरित्यर्थः। विपरीतबुद्ध्यारोपनिमित्तेनलोकदुःखेननलिप्यतइत्यन्वयः। तत्राकांक्षापूर्वकंहेतुमाह। कुतइत्यादिना इतियस्मात्तस्मान्नलिप्य तइत्यन्वयः॥ स्वापेक्षयापरस्योत्कर्षदर्शनंपारतंत्र्यंचयस्यस्यहीनत्वंदुःखकारणंप्रसिद्धंलोकेतदभावान्नपरमात्मादुःखीततस्तत्प्राप्तिःपरमपुरुषार्थोभविष्यतीत्याह। किंच सहीत्यादिना॥ हिशब्दोनतत्समश्चाभ्यधिकश्चदृश्यतइतिश्रुतिप्रसिद्धत्वद्योतनार्थः। वशित्वेहेतुमाह। कुतइत्यादिना। अंतरात्मत्वेहेतुत्वेनोत्तरवाक्यंव्याचष्टे। यतइत्यादिना

सूर्योयथाचक्षुषआलोकेनोपकारंकुर्वन्मूत्रपुरीषाद्यशुचिप्रकाशनेनतद्दर्शिनःसर्वलोकस्यचक्षुरपिसन्नलिप्यतेचाक्षुषैरशुच्यादिदर्शननिमि त्तैराध्यात्मिकैःपापदोषैर्बाह्यैश्चाशुच्यादिसंसर्गदोषैरेकःसंस्तथासर्वभूतांतरात्मानलिप्यतेलोकदुःखेनबाह्यः लोकोह्यविद्ययास्वात्मन्यध्यस्त याकामकर्मोद्भवंदुःखमनुभवतिनतुसापरमार्थतःस्वात्मनियथारज्जुशुक्तिकोखरगगनेषुसर्परजतोदकमलानिनरज्ज्वादीनांस्वतोदोषरूपाणिसंतिसं सर्गिणिविपरीतबुद्ध्यध्यासनिमित्तात्तद्दोषवद्विभाव्यंते। नतद्दोषैस्तेषांलेपोविपरीतबुद्ध्यध्यासबाह्याहिते। तथात्मनिसर्वोलोकःक्रियाकारकफलात्म कंविज्ञानंसर्पादिस्थानीयंविपरीतमध्यस्यतन्निमित्तंजन्ममरणदुःखमनुभवति। नत्वात्मासर्वलोकात्मापिसन्विपरीताध्यारोपनिमित्तेनलिप्यतेलोकदुः

सूर्योयथासर्वलोकस्यचक्षुर्नलिप्यतेचाक्षुषैर्बाह्यदोषैः॥ एकस्तथासर्वभूतांतरात्मानलिप्यतेलोकदुःखेनबाह्यः॥ ॥ ॥
एकोवशीसर्वभूतांतरात्मैकंरूपंबहुधायःकरोति॥ तमात्मस्थंयेनुपश्यंतिधीरास्तेषांसुखंशाश्वतंनेतरेषां॥ ॥ ॥

खेन कुतोबाह्यरज्ज्वादिवदेवविपरीतबुद्ध्यध्यासबाह्योहिसइति। किंचसहिपरमेश्वरःसर्वगतःस्वतंत्रःएकोनतत्समोभ्यधिकोवान्योस्तिवशीसर्वंह्यस्यज गद्वशेवर्त्तते। कुतःसर्वभूतांतरात्मा॥ एतएकमेवसदेकरससरूपमात्मानंविशुद्धविज्ञानरूपंनामरूपाद्यशुद्धोपाधिभेदवशेनबहुधाअनेकप्रकारंयःकरोति स्वात्मसत्तामात्रेणाचिंत्यशक्तित्वात्। तमात्मस्थंस्वशरीरहृदयाकाशेबुद्धौचैतन्याकारेणाभिव्यक्तमित्येतत्। नहिशरीरस्याधारत्वमात्मनआकाशवद मूर्त्तत्वादादर्शस्थमुखमितियद्वत्। तमेतमीश्वरमात्मानंयेनिवृत्तबाह्यवृत्तयोनुपश्यंत्याचार्यागमोपदेशमनुसाक्षादनुभवंतिधीराविवेकिनस्तेषांपरमेश्व रभूतानांशाश्वतंनित्यंसुखमात्मानंदलक्षणंभवतिनेतरेषांबाह्यासक्तबुद्धीनामविवेकिनांस्वात्मभूतमप्यविद्याव्यवधानात्॥ ॥स्वात्मसत्तामात्रेणोपाधिभेद

मादायबहुधाकरणेहेतुमाह। अचिंत्येति। यतएवंकरोतिअतःसर्वभूतांतरात्मा यस्तमित्यन्वयः। नन्वात्मशब्दःशरीरवाच्यप्यतस्तत्स्थत्वंकिमितिनव्याख्यायतेइत्यतआह। नही ति। तर्हितत्स्थत्वव्यवहारःकथमित्याशंक्यादर्शप्रतीतिमात्रेणादर्शस्थमुखमितिवत्। शरीरस्थमित्युपचर्यतइत्याह। आदर्शस्थमित्यादिना॥ तमात्मस्थमितितत्त्वंपदयोःसामाना धिकरण्यादैक्यंविवक्षितमाह। तमीश्वरमात्मनमितिनिवृत्ताबाह्येभ्योविषयेभ्योदृष्टिर्येषांतेतथा। उपाधिबहुत्वाभिप्रायेणबहुवचनंनात्मापेक्षयेत्याह॥ परमेश्वरभूतानामिति॥ ९

स्थ

बाह्यासक्तबुद्धीनां बाह्येषु विषयेष्वासक्ता बुद्धिर्येषां तेषां स्वात्मभूतमपीति सुखमित्यनुवर्त्तते। अविदुषामात्मभूतं सुखं नेत्यत्र हेतुमाह। अविद्याव्यवधानादिति। इदानीं परमा
त्मन्युपपत्तिप्रदर्शनार्थमाह किंचेति सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयदिति श्रुतेरत्रानाभ्यागमकृतविप्रणाशप्रसंगपरिहाराय च कल्पांतरीयभावानां प्रलीनानां कल्पांतरे
सजातीयरूपेणोत्पादः प्रतीयते स तदा स्यात् यदि विनाशिनां भावानां शक्तिशेषो लयः स्यात्ततः प्रलये विनश्यत्सर्वं यत्र शक्तिशेषं विलीयते सोऽभ्युपगंतव्य इत्यनित्यानां नित्य इ
त्यस्यार्थः॥ बुद्धिमतामपि ब्रह्मेंद्रादीनां परमानंदाभिमुख्यं हित्वा बहिर्मुखा चेतनोपलभ्यते सापि नियंतारं गमयतीत्याह॥ चेतनश्चेतनानामिति अनग्नीनामुदकादीनामग्निनि
मित्तं दाहकत्वं यथा तथान्येषां ब्रह्मादीनां प्राणिनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमित्यन्वयः। ब्रह्मादिसंघातानां चेतयितृत्वं यच्चैतन्यनिमित्तं सोऽस्ति परमात्मेत्यर्थः।
विस्तृतकर्मफलं कर्मस्वरूपाद्यभिज्ञेन दीयमानं भवितुमर्हति व्यवहितफलत्वात्सेवाफलवदित्याह किंच स सर्वज्ञ इति ननु कर्मवशादेव तत्फलसिद्धेरीश्वरोः किंचित्कर इ

किंच नित्यो विनाशी अनित्यानां विनाशिनां चेतनश्चेतनानां चेतयितृणां ब्रह्मादीनां प्राणिनां अग्निनिमित्तमिव दाहकत्वमनग्नीनामुदकादीनामात्मचैतन्य
निमित्तमेव चेतयितृत्वमन्येषां किंच स सर्वज्ञः सर्वेश्वरः कामिनां संसारिणां कर्मानुरूपं कामान् कर्मफलानि स्वानुग्रहनिमित्तांश्च कामान् य एको बहूनामनेकेषाम
नायासेन विदधाति प्रयच्छतीत्येतत्। तमात्मस्थं येऽनुपश्यंति धीरास्तेषां शांतिः उपरतिः शाश्वती नित्या स्वात्मभूतैव स्यान्नेतरेषामनेवंविधानां येन दात्मविज्ञा

नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्। तमात्मस्थं येऽनुपश्यंति धीरास्तेषां शांतिः
शाश्वती नेतरेषां॥ तदेतदिति मन्यंतेऽनिर्देश्यं परमं सुखं॥ कथं नु तद्विजानीयां किमु भाति विभाति वा॥ ॥ ॥

न सुखमनिर्देश्यं निर्देष्टुमशक्यं परमं प्रकृष्टं प्राकृतपुरुषवाङ्मनसयोरगोचरमपि सन्निवृत्तैषणा ये ब्राह्मणास्ते यत्तदेतत्प्रत्यक्षमेवेति मन्यंते। कथं नु केन प्र
कारेण तत्सुखमहं विजानीयामिदमित्यात्मबुद्धिविषयमापादयेयं यथा निवृत्तैषणा यतयः। किमु तद्भाति दीप्यते प्रकाशात्मकं तद्यतोऽस्मद्बुद्धिगोचरत्वे
न विभाति विस्पष्टं दृश्यते किं वा नेति। अत्रोत्तरमिदं भाति च विभाति चेति॥

११ त्यत आह। स्वानुग्रहेति कर्मणामीश्वरप्रसादद्वारा फलहेतुत्वान्न दोष इति भावः॥ विद्वदनुभ
वोऽपि परमानंदे प्रमाणमित्याह। यत्तदात्मविज्ञानमिति। तदात्मसुखं परमनिर्देश्यमपि एतदिति मन्यंत इत्यन्वयः। के ते इत्याकांक्षायामाह। निवृत्तेति। तदिति पदमध्याहर्त्तव्यं
एतदित्यस्य प्रत्यक्षमेवेति व्याख्यानं विद्वत्प्रत्यक्षत्वादात्मसुखस्या सुखस्य संभावितत्वयानद्धि जिज्ञासितव्यं परमात्मदर्शनं किंतु श्रद्धानतया विचारयितव्यमेवेत्याह॥ क
थं न्विति। यथा निवृत्तैषणा यतयो विचारेणात्मबुद्धिविषयमात्मसुखमापादयंति तद्वदात्मरूपसुखमात्मबुद्धिविषयं कथमापादयेयमिति विचारयितव्यमित्यर्थः। ननु वाङ्मन
सातीतस्यासंभावितत्वेन प्रकाशमानत्वाभावात् कथं बुद्ध्यारोह इति शंकते किम्विति। उ इति वितर्के यत इति यदित्यर्थे। यत्प्रकाशात्मकमात्मज्योतिस्तदस्मद्बुद्धिगोचरत्वेन विस्पष्टं दृश्य
ते किमित्यन्वयः। वाशब्दं व्याचष्टे। नेति। अथ वा यतः प्रकाशात्मकं तदात्मज्योतिरतोऽस्मद्बुद्धिविषयत्वेन विस्पष्टं दृश्यते किमिति संबंधः वाशब्दं व्याचष्टे। किं वा नेति। इदं शब्दव्याख्यानं

भातिविभातिकिंतदृशदस्यलिर्थः॥

= कार्य ३

क॰ उ॰ २९

जलंतत्तजलमुल्मुकमलातंतदादीत्यादिशब्देनायःपिंडादिगृह्यते। ननुप्रकाशविशिष्टघटादेःस्ववृत्तिघटादिप्रकाशकत्वंदृष्टंतद्वदन्याधीनप्रकाशस्यब्रह्मणःसूर्यादिप्रकाशत्वमित्याशंक्याह। नहीति। अविद्यमानेतिपदच्छेदःप्राप्ताप्राप्तविवेकेनप्रकाशस्यैवभासकत्वान्नस्वतोघटादेर्भासकत्वंतद्वद्प्रकाशत्वेब्रह्मणोनादित्यादिप्रकाशकत्वंस्यादितिभावः॥ ॥इतिकठवल्ल्योपनिषद्भाष्यविवरणेपंचमावल्लीसमाप्ता॥ ॥शाल्मल्यादितूलंदर्शनाद्दृष्टमपिवृक्षमूलंयथास्तीत्यवधार्यतेतद्वद्दृष्टस्यापिब्रह्मणोवधारणायप्रक्रमतइत्याह। तूलावधारणेनेति। स्वरूपावदिधारयिषयास्वरूपनिश्चयेच्छयास्वरूपावधारणविषयेतिपाठेविषयशब्दोनिमित्तवाचीयमंतिकावल्ली। ऊर्ध्वमित्युत्कृष्टमित्यर्थः यद्विष्णोःपरमंपदंतदस्यसोयमूर्ध्वमूलइत्यन्वयः। इदंशाब्दार्थंस्फुटयति। अव्यक्तादीति। अव्यक्तमज्ञानंचैतन्यमादिर्यस्यसोयंतथास्थावरोवृक्षादिरंतेयस्य

कथंनतत्रतस्मिन्स्वात्मभूतेब्रह्मणिसर्वावभासकोपिसूर्योभातितद्ब्रह्मनप्रकाशयतीत्यर्थः॥ तथानचंद्रतारकंनेमाविद्युतोभांतिकुतोयमस्मद्गोचरोग्निः किंबहुनायदिदमादित्यादिकंभातितत्तमेवपरमेश्वरंभांतंदीप्यमानमनुभातिअनुदीप्यतेयथाजलोल्मुकाद्यग्निसंयोगाद्ग्निंदहंतमनुदहंतिनस्वतस्तद्वत्तस्यैवभासादीप्त्यासर्वमिदंसूर्यादिविभातियतएवंतदेवब्रह्मभातिचविभातिचकार्यगतेनविविधेनभासातस्यब्रह्मणोभासरूपत्वंस्वतोऽवगम्यते। नहिस्वतोऽविद्यमानंभासनमन्यस्यकर्तुंशक्यंघटादीनामन्यावभासकत्वादर्शनाद्भासनरूपाणांचादित्यादीनांतद्दर्शनात्॥ ॥इतिक॰ द्वि॰ पं॰ सम॰

नतत्रसूर्योभातिनचन्द्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः॥ तमेवभांतमनुभातिसर्वंतस्यभासा
सर्वमिदंविभाति॥ इतिकठवल्ल्यांद्वितीयाध्यायेद्वितीयवल्लीसमाप्तिः॥ ॥ ॐ ऊर्ध्वमूलः॥ ॥

= कार्य

॥ॐ तूलावधारणेनैवमूलावधारणंवृक्षस्यक्रियतेलोकेयथाएवंसंसारकार्यवृक्षावधारणेनतन्मूलस्यब्रह्मणःस्वरूपावदिधारयिषयेयंषष्ठीवल्ल्यारभ्यते। ऊर्ध्वमूलः ऊर्ध्वमूलंयद्विष्णोःपरमंपदमस्येतिसोयमव्यक्तादिस्थावरांतसंसारवृक्षः ऊर्ध्वमूलः वृक्षश्चव्रश्चनाज्जन्मजरामरणशोकाद्यनेकानर्थात्मकः॥ प्रतिक्षणमन्यथास्वभावोमायामरीच्युदकगंधर्वनगरादिवत्दृष्टनष्टस्वरूपत्वात् ॥ ॥ ॥ ॥ ॥

सोयंतथासचासौसचेतिपुनःकर्मधारयःसंसारएववृक्षः संसारवृक्षः। वृक्षशब्दप्रवृत्तिनिमित्तमाह व्रश्चनादितिओव्रश्चूच्छेदनेइत्यस्यधातोःक्तप्रत्ययांतस्यरूपंवृक्षइतिछेद्यत्वेयुक्तिमाह जन्मजरेत्यादिनाक्वचिदविच्छिन्नजन्मजरेत्यादिपाठःटिप्पणकारैर्नगृहीतः॥ जन्मचजराचमरणंचशोकश्चतएवआदिर्येषांतेतथा। तेऽनेकेनर्थाआत्मास्वरूपंयस्यवृक्षस्यसतथाऽनेकानर्थात्मकत्वादेवप्रतिक्षणमन्यथास्वभावत्वंसात्विकराजसतामसवृत्तिभेदेनेत्याह। प्रतिक्षणमितिप्रतिक्षणमन्यथास्वभावत्वेदृष्टांतमाह। मायेत्यादिना। मायेन्द्रजालिकमायादिवत्प्रतिक्षणमन्यथास्वभावत्वेहेतुमाह। दृष्टेति। दृष्टंदर्शनंतत्समयएवप्रतीयतेनोत्तरकालमित्यर्थः। अवयवार्थमाद्यसंसारोवृक्षइत्युक्तंवृक्षसादृश्याद्धावृक्षशब्दप्रयोगोभवतिसंसारइत्याह॥ ॥ ॥ ॥ ॥ ॥

भा॰ टी॰

राम २९

खं

अवसाने चेत्यादिना। चशब्दः पक्षांतरद्योतकः। प्रसिद्धो वृक्षः स्थाणुर्वा पुरुषो वेति विकल्पास्पदो दृष्टः। तथायमपि संघातो वा परिणामो वारब्धो वा नवेत्यादीनामनेकेषां शतसंख्या कपाषंड बुद्धिविकल्पानामास्पद विषय इत्यर्थः किंसंज्ञको यं वृक्ष इत्यनध्यवसायगोचरः कश्चित् वृक्षो दृष्टस्तथायमपीति साम्यांतरमाह। तत्त्वजिज्ञासुभिरिति स्वतोऽसारत्वे संसारस्य किं तस्य सारं इत्यपेक्षायामाह। वेदांतेति वेदांतैर्निर्धारितं परं ब्रह्मैव मूलं सारो यस्य स तथा। अविद्याध्यासः कामकर्माण्यव्यक्तमज्ञातचैतन्यमेतानि बीजं तस्मात्प्रभव उत्पत्तिर्यस्य स तथा परस्य ब्रह्मणः विज्ञानक्रियाशक्तिद्वयात्मको हिरण्यगर्भः प्रथमोवस्था भेदोंऽकुरोस्येति तथोक्तः। सर्वेषां प्राणिनां लिंगशरीरविशेषास्त एव शाखामूलस्थानानि यस्य स तथोक्तः तृष्णैव सलिलं तेन सेकः सेचनं तेनोद्भूतो दर्पो गर्व उच्छ्रायो यस्य स तथोक्तः। बुद्धींद्रियाणां ये विषयाः शब्दादयः प्रवालांकुराः किसलयानि अस्येति तथोक्तः। श्रुत्यादीनि पलाशानि पत्राण्यस्येति तथा यज्ञदानाचारादीन्यनेकाक्रियाएव शोभनानि पुष्पाण्यस्येति तथा क्वचिद्यज्ञदानतप आदीति पाठः सुखदुःखे प्राणि

अवसाने च वृक्षवद्भावात्मकः कदलीस्तंभवन्निःसारोऽनेकशतपाखंडबुद्धिविकल्पास्पदस्तत्त्वजिज्ञासुभिरनिर्धारितेदंतत्त्वो वेदांतनिर्धारितपरब्रह्ममूलसारोऽविद्याकामकर्माव्यक्तबीजप्रभवोऽपरब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्यगर्भांकुरः॥ सर्वप्राणिलिंगभेदस्कंधस्तत्तत्तृष्णाजलासेकोद्भूतदर्पः बुद्धींद्रियविषयप्रवालांकुरः श्रुतिस्मृतिन्यायविद्योपदेशपलाशो यज्ञदानतपआद्यनेकक्रियासुपुष्पः सुखदुःखवेदनाऽनेकरसः प्राण्युपजीव्यानं

अवाक्शाख एषोऽश्वत्थः सनातनः॥

तफलः तत्तत्तृष्णासलिलावसेकप्ररूढजडीकृतदृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षीकृतनीडः प्राणिसुखदुःखोद्भूतहर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताकृष्टरुदितहाहामुंचमुंचेत्याद्यनेकशब्दकृततुमुलीभूतमहारवो वेदांतविहितब्रह्मात्मदर्शनासंगशस्त्रकृतोच्छेद एषः संसारवृक्षोऽश्वत्थोऽश्वस्थवत्कामकर्मवातेरितनित्यप्रचलितस्वभावः स्वर्गनरकतिर्यक्प्रेतादिभिःशाखाभिरवाक्शाखः सनातनोऽनादित्वाच्चिरंप्रवृत्तः॥

वेदना एवानेको रसोस्येति तथा प्राणिभिरुपजीव्यमनंतत्वेन फलं यस्मिन्स तथा फलतृष्णैव सलिलावसेकस्तेन प्ररूढानि कर्मवासनादीनि जडीकृतानि सात्विकादिभावेन मिश्रीकृतानि दृढबद्धानि अवांतरमूलानि यस्येति स तथोक्तः सत्यनामादिषु सप्तलोकेषु ब्रह्मादीनि भूतान्येव पक्षिणस्तैः कृतं नीडमास्पदं यस्मिन्स तथोक्तः। प्राणिनां सुखदुःखाभ्यामुद्भूतौ हर्षशोकौ ताभ्यां यथासंख्येन जातानि नृत्यं च गीतं च गानं च वादित्रं च वाद्यसामान्यं क्ष्वेलितं च केलिविशेषः आस्फोटितं च भुजाबंधहर्षितं चामोदविशेषस्तज्जऽन्यपरहस्ताद्याकर्षणमाकृष्टं च तानि तथा तानि च रुदितादयोनेके शब्दाश्च तैः कृतस्तुमुलीभूतो महारवो यस्मिन्स तथेति विग्रहः आस्फोटहसिते त्यपि पाठः सुगमः वेदांतैस्तत्त्वमस्यादिभिर्विहितं जनितं यत्प्रत्यगभिन्नब्रह्मज्ञानं तदेवासंगशस्त्रमप्रतिबध्यमानशस्त्रं तेन कृत उच्छेदो नाशो यस्य स तथोक्तः अश्वत्थशब्दस्य सांसारिगौणी वृत्तिमाह। अश्वस्थवदिति। कामकर्मणी एव वातस्तेनेरितः नित्यः प्रचलितः स्वभावो यस्य स तथोक्तः तिर्यक् शुनकादिजन्म प्रेतोऽनग्निसंस्कृतानां जन्तूनामवस्थाविशेषः आंतरालिकः

आदिशब्देनस्वेदजन्यादयोग्राह्याः तादृशैः शाखाभिरवाक्शाखः सनातनः चिरंप्रवृत्तइत्यन्वयः तत्रहेतुः अनादित्वादिति॥ तदेवेत्यादिवाक्यमपेक्षितंपूरयन्व्याचष्टे। यदिति। अ
विनाशस्वभावत्वेहेतुमाह। सत्यत्वादिति। प्रपंचस्यतद्वैपरीत्यमाह। वाचेत्यादिना। कदेत्यपेक्षायामाह। उत्पत्तीति। कार्यस्यशून्यपर्यंतनाशादसत्पूर्वकमेवजन्मततोनास्तिमूलं
मितिशंकते। यद्विज्ञानादितिपरिहरति। तन्नेति। शशविषाणादेरसत्तउत्पत्त्यदर्शनात्कार्यस्यसत्पूर्वकत्वप्रसिद्धेश्चास्तिसद्रूपंवस्तुजगतोमूलंतच्चप्राणपदलक्ष्यंप्राणवृत्तेरपि



यदस्यसंसारवृक्षस्यमूलंतदेवशुक्रंशुक्लंशुद्धंज्योतिष्मच्चैतन्यात्मज्योतिःस्वभावंतदेवब्रह्मसर्वमहत्वात्तदेवामृतमविनाशस्वभावमुच्यतेकथ्यतेस
त्यत्वाद्वाचारंभणंविकारोनामधेयमनृतमन्यदतोमर्त्यं। तस्मिन्परमार्थसत्येब्रह्मणिलोकागंधर्वनगरमरीच्युदकमायासमाःपरमार्थदर्शनाभावावगम
नाःश्रिताआश्रिताःसर्वेसमस्ताउत्पत्तिस्थितिलयेषु। तदेतद्ब्रह्मनात्येतिनातिवर्त्ततेमृदादिमिवघटादिकार्यंकश्चनकश्चिदपिविकारःएतद्वैतद्यद्विज्ञानाद
मृताभवंतीत्युच्यतेजगतोमूलंतदेवनास्तिब्रह्मासतएवेदंनिःसृतमिति। तन्न। यदिदंकिंचयत्किंचेदंजगत्सर्वंप्राणेपरस्मिन्ब्रह्मणिसत्येजतिकंपतेततएव
निःसृतंनिर्गतंसत्प्रचलतिनियमेनचेष्टते॥ यदेवंजगदुत्पत्त्यादिकारणंब्रह्मतन्महद्भयंमहच्चतद्भयंचबिभेत्यस्मादितिमहद्भयंवज्रमुद्यतंउद्यतमिववज्रं

तदेवशुक्रंतद्ब्रह्मतदेवामृतमुच्यते॥ तस्मिंल्लोकाःश्रिताःसर्वेतदुनात्येतिकश्चनएतद्वैतत्॥ यदिदंकिंच
जगत्सर्वंप्राणएजतिनिःसृतं॥ महद्भयंवज्रमुद्यतंयएतद्विदुरमृतास्तेभवंति। भयादस्याग्निस्तपतिभ
यात्तपतिसूर्यः॥ भयादिन्द्रश्चवायुश्चमृत्युर्धावतिपंचमः॥ इहचेदशकद्बोद्धुंप्राक्शरीरस्यविस्रसः॥ ॥

यथावज्रोद्यतकरंस्वामिनमभिमुखीभूतंदृष्ट्वाभृत्यानियमेनतच्छासनेवर्त्तंतेतथेदंचंद्रादित्यग्रहनक्षत्रतारकादिलक्षणंजगत्सेश्वरंनियमेनक्षणम
प्यविश्रांतंवर्ततइत्युक्तंभवतियएतद्विदुःस्वात्मप्रवृत्तिसाक्षिभूतमेकंब्रह्मअमृताअमरणधर्माणस्तेभवंति कथंतद्भयाज्जगद्वर्ततइत्याहभयाद्भीत्या
ति
अस्यपरमेश्वरस्याग्निस्तपतिभयात्तपतिसूर्यः। भयादिन्द्रश्चवायुश्चमृत्युर्धावतिपंचमः। नहीश्वराणांलोकपालानांसमर्थानांसतांनियंताचेद्वज्रोद्यत
करवन्नस्यात्स्वामिभयभीतानामिवभृत्यानांनियताप्रवृत्तिरुपपद्यतेतच्चेहजीवन्नेवचेद्यद्यशकच्छक्नोतिशक्तःसन्जानात्येतद्भयकारणंब्रह्म
बोद्धुमवगंतुंप्राक्पूर्वंशरीरस्यविस्रसःअवस्रंसनात्पतनात्संसारबंधान्विमुच्यते॥ ॥ हेतुत्वादित्यर्थः। धात्वर्थंप्रकटयतिततएवेति॥ नात्रवाक्येषुब्रह्मणो
विच्छेदोस्तीत्यभिप्रेत्योत्तरंवाक्यंव्याचष्टे। यदेवेदमित्यादिना। उद्यतंवज्रमिववज्रमुद्यतं॥ पदार्थमभिधायतात्पर्यमाह। यथेत्यादिना। एतच्छब्दार्थमाह। स्वात्मेति स्वसंबध्यं
तःकरणप्रवृत्तीनांसाक्षिभूतमित्यर्थः। यएतद्विदुस्ते अमृताभवंतीत्यन्वयः। सूर्यादीनांनियतप्रवृत्त्यनुपपत्त्यानियामकत्वेनसंभावितंयत्पारमेश्वरंरूपंतदवगमायेहयत्नः
कर्त्तव्यइत्साकांक्षापूर्वकमाह। कथंतदित्यादिना। नहिनियताप्रवृत्तिरुपपद्यतइतिसंबंधः। तच्चेहैवबोद्धुंशक्तः॥ सन्निहैवचेज्जानातितदामुच्यतएवेतिसम्बन्धः॥ ॥

ततइत्यस्यव्याख्यानं अनवबोधादितिपरमात्मावगमाययत्नःकार्यइत्युक्तमुपसंहरति। तस्मादित्यादिना॥ यथादर्शइत्यादिवाक्यंव्याख्यातुंपातनिकामाह। यस्मादित्यादिना
। इहैवमनुष्यदेहएवयथाऽदर्शस्थस्यमुखस्यस्पष्टमुपलब्धिस्तथात्मा यस्मादात्मनिस्पष्टमुपलभ्यते। तस्मादिहैवात्मनोदर्शनमित्यन्वयएवकारव्यावर्त्यमाह। नेति। तर्हिब्र
ह्मलोकेपितद्दर्शनंनस्यादित्याशंक्याह। ब्रह्मेति। ननुतर्हिब्रह्मलोके एवात्मनोदर्शनंस्यादित्याशंक्याह। सचेति। आकांक्षापूर्वकमवतारितवाक्यंव्याचष्टे। कथमित्यादिना।
स्वप्नइत्यत्राविविक्तमितिपदच्छेदः। पितृलोकआत्मदर्शनमितिशेषः पितृलोकेदर्शनस्याविविक्तत्वेहेतुमाह। कर्मफलेति॥ गंधर्वलोकग्रहणमुपलक्षणमित्याह। एवमित्येकः
स्मिन् आत्मदर्शनमित्यनुवर्त्तते। दुष्प्रापत्वेहेतुमाह। अत्यंतेति विशिष्टंकर्माश्वमेधादितत्सहितंज्ञानमुपासनंतत्साध्यत्वादित्यर्थः। पदतात्पर्यार्थमाह। तस्मादिति। इहैवमनुष्य

नचेदशकद्बोद्धुंततोऽनवबोधात्सर्गेषुसृज्यंतेयेषुस्रष्टव्याःप्राणिनइतिसर्गाःपृथिव्यादयोलोकास्तेषुसर्गेषुलोकेषुशरीरत्वायशरीरभावायकल्पतेसम
र्थोभवतिशरीरंगृह्णातीत्यर्थः। तस्माच्छरीरविस्रंसनात्प्रागात्मबोधाययत्नआस्थेयः। यस्मादिहैवात्मनोदर्शनमादर्शस्थस्येवमुखस्यस्पष्टमुपपद्य
तेनलोकांतरेषुब्रह्मलोकादन्यत्रसचदुःप्रापः। कथमित्युच्यते। यथाआदर्शेप्रतिबिंबभूतंआत्मानंपश्यतिलोकोऽत्यंतविविक्तंतथेहात्मनिस्वबुद्धावादर्शव
न्निर्मलीभूतायांविविक्तमात्मनोदर्शनंभवतीत्यर्थः। यथास्वप्नेऽविविक्तंजाग्रद्वासनोद्भूतंनथापितृलोकेऽविविक्तमेवदर्शनमात्मनः। कर्मफलोपभोगासक्त
त्वात्। यथाऽप्सुअविभक्तावयवमात्मरूपंपरीवदृश्येपरिदृश्यतइव॥ तथागंधर्वलोकेऽविभक्तमेवदर्शनमात्मनः। एवंचलोकांतरेष्वपिशास्त्रप्रामाण्या

ततःसर्गेषुलोकेषुशरीरत्वायकल्पते। यथादर्शेतथात्मनियथास्वप्नेतथापितृलोके। यथाप्सुपरीवदृशेतथागंधर्व
लोके॥ छायातपयोरिवब्रह्मलोके। इन्द्रियाणांपृथग्भावमुदयास्तमयौचयत्॥ ॥ ॥ ॥ ॥

दवगम्यते। छायातपयोरिवात्यंतविविक्तंब्रह्मलोकएवैकस्मिन्सचदुःप्रापअत्यंतविशिष्टधर्मज्ञानसाध्यत्वात्। तस्मादात्मदर्शनायेहैवयत्नःकर्तव्यइ
त्यभिप्रायः कथमसौबोद्धव्यःकिंवातदवबोधेप्रयोजनमित्युच्यते। इन्द्रियाणांश्रोत्रादीनांस्वविषयग्रहणप्रयोजनेनस्वकारणेभ्यआकाशादिभ्यःपृथगुत्प
द्यमानानामत्यंतशुद्धात्केवलाच्चिन्मात्रात्मस्वरूपात्पृथग्भावंस्वभावविलक्षणात्मकतां तथातेषामेवेन्द्रियाणामुदयास्तमयौचउत्पत्तिप्रलयौजाग्रत्स्वापा
पेक्षयानात्मनः॥ इतिमत्वाज्ञात्वाविवेकतोधीरोधीमान्नशोचति आत्मनोनित्यैकस्वभावस्याव्यभिचाराच्छोककारणानुपपत्तेः तथाचश्रुत्यंतरं ।॥

शरीरएवउत्तरंवाक्यमाकांक्षापूर्वकंयोजयति। कथमित्यादिना। इन्द्रियग्रहणमुपलक्षणमित्याह। स्वविषयेति विषयाःशब्दादयस्तेषांग्रहणमेवप्रयोजनंतेनसहेत्यर्थः। इंद्रिया
णांनित्यत्वंव्यावर्त्तयति। आकाशेति। पृथग्भावप्रतियोगिनंनिर्दिशति। अत्यंतेति विलक्षणात्मकतांमत्वेत्यन्वयः एवमुत्पत्तिप्रलयौमत्वेत्यन्वयः। मननप्रकारंदर्शयति। जाग्रदि
ति। नआत्मनस्तावितिमत्वेतिसंबंधः उत्पत्तिप्रलयौजाग्रत्स्वप्नावस्थापेक्षयानात्मनइतिपाठांतरंसुगमं । ज्ञानेसाधनमाह। विवेकतइति धीमान्प्रत्यग्ब्रह्मैक्यपर्यवसन्नमतिः।

शोकाभावे हेतुमाह। आत्मन इति। साध्याहारमुदयास्तमयौ च यदित्यत्र यच्छब्दं व्याचष्टे। यस्मादिति। तस्मान्नासौ बहिरवगंतव्यः इत्यर्थः। प्रकारांतरेण व्याचष्टे। यस्मादिति सर्वस्येति तस्मान्न बहिरवगंतव्यः। किंतु प्रत्यक्त्वेनैवावगंतव्य इति शेषः। तदिति पृथग्भावप्रत्यक्त्वे इन्द्रियेभ्यः पराह्यर्था इति पूर्वमुक्तं इह त्वग्रहणात्सर्वप्रत्यगात्मत्वं न संभवतीत्याशंक्याह। अर्थानामिहेति। पूर्ववदन्यदिति अन्यत्सरत्वाद्युपवर्णनं पूर्ववदिंद्रियेभ्यः पराह्यर्था इतिव्याख्यानवदित्यर्थः। व्यापकत्वे हेतुमाह। व्यापकस्येति॥ बुध्यादिसाश्रयं गुणत्वाद्रूपादिवत् इति वैशेषिका अनुमिमते तदसत् साश्रयत्वसाधने सिद्धसाधनत्वात् मनस एव कामादिगुणवत्वश्रवणादात्माश्रयत्वकल्पने च निर्गुणत्वप्रतिपादकशास्त्रविरोधो दात्मना सह बुध्यादेरविनाभावाग्रहणाच्च न बुध्याद्यात्मलिंगमित्याह लिंग्यते गम्यते येनेति। मुच्यतेऽमृतत्वं च गच्छतीति वाक्ययोः पौनरुक्त्यं परि

तरति शोकमात्मविदिति। यस्मादात्मन इन्द्रियाणां पृथग्भाव उक्तो नासौ बहिरधिगंतव्यो यस्मात्स प्रत्यगात्मा स सर्वस्य तत्कथमित्युच्यते। इन्द्रियेभ्यः परं मन इत्यादि अर्थानामिहेन्द्रियसमानजातीयत्वादिन्द्रियग्रहणेनैव ग्रहणं। पूर्ववदन्यत्सत्वशब्दात्तु बुद्धिरिह। अव्यक्तात्तु परः पुरुषो व्यापको व्यापकस्याप्याकाशादेः सर्वस्य कारणत्वात्। अलिंगो लिंग्यते गम्यते येन तल्लिंगं बुध्यादि तदविद्यमानमस्येति सोऽयमलिंग एव सर्वसंसारधर्मवर्जित इत्येतत्। यज्ज्ञात्वाचार्यतः शास्त्रतश्च मुच्यते जंतुरविद्यादि हृदयग्रंथिभिर्जीवन्नेव। पतितेऽपि शरीरेऽमृतत्वं च गच्छति सोऽलिंगः परोऽव्यक्तात्पुरुष इति पूर्वेणैव संबंधः। कथं

पृथगुत्पद्यमानानां मत्वा धीरो न शोचति। इन्द्रियेभ्यः परं मनो मनसः सत्वमुत्तमं। सत्वादधि महानात्मा महतोऽव्यक्तमुत्तमं॥ अव्यक्तात्तु परः पुरुषो व्यापकोऽलिंग एव च। यं ज्ञात्वा मुच्यते जंतुरमृतत्वं च गच्छति। न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनं। हृदा मनीषा मनसाऽभिकॢप्तो य एतद्विदुरमृतास्ते भवंति॥ ९ तर्ह्यलिंगस्य दर्शनमुपपद्यत इत्युच्यते। न संदृशे संदर्शनविषये न तिष्ठति प्रत्यगात्मनोऽस्य रूपं अतो न चक्षुषा सर्वेंद्रियेण चक्षुर्ग्रहणस्योपलक्षणार्थत्वात् पश्यति नोपलभते कश्चन कश्चिदप्येनं प्रकृतात्मानं। कथं तर्हि तं पश्येदित्युच्यते। हृदा हृत्स्थया बुध्या मनीषा मनसः संकल्पादिरूपस्येष्टे नियंतृत्वेनेति मनीट् तया हृदा मनीषा विकल्पवर्जितया मनसा मननरूपेण सम्यग्दर्शनेनाभिकॢप्तोऽभिसमर्थितोऽभिप्रकाशित इत्येतत्। आत्मा ज्ञातुं शक्य इति शेषः। तमात्मानं ब्रह्मैतद्ये विदुरमृतास्ते भवंति॥ ९ इहरन्व्याचष्टे यं ज्ञात्वेत्यादिना। अलिंगत्वे दर्शनमनुपपन्नमिति पृच्छति कथमिति प्रष्टुरभिप्रायः किं विषयतया दर्शनं वक्तव्यं उताविषयतयैव दर्शनोपायो वाच्य इति प्रथमं प्रत्याह। न संदृश इति अस्य प्रत्यगात्मनो रूपं न दर्शनविषये तिष्ठतीत्यन्वयः। रूपादिमद्दर्शनयोग्यं भवति। तदभावादिति भावः। द्वितीयं प्रत्याह। कथं तर्हीति बाह्यकरणग्रामोपरमे तु यदा मनो विषयान्संकल्पयते तदा मुमुक्षोर्बुद्धिस्तस्य नियंत्री भवति। हे मनः किमर्थं त्वं पिशाचवद्भ्रमसि न तावत्स्वप्रयोजनार्थं जडत्वात्प्रयोजनसंबंधानुपपत्तेर्विषयाणां च स्वयमिष्टत्वादिदोषदुष्टानां संबंधे न प्रयोजनानुपपत्तेः नापि चेतनार्थं तस्यासंगत्वात् र



२पि भ्णु१

(चैतन्यः)

नियंतृत्वेन बुद्धिर्मनीडित्युच्यते इत्याह। मनसइति। अभिप्रकाशितइति। योत्र संघाते ज्ञोंशः सोस्मिन्सर्वशरीरेष्वेकलक्षण लक्षितत्वादेक एवेति विचारेण प्रथमं संभावित इत्यर्थः। श्रुतवेदांतानामपि केषांचिद्ब्रह्मास्मीति बुद्धिस्थैर्यादर्शनादस्ति प्रतिबंधांतरं तदपनयनायान्योप्युपायो वक्तव्य इत्याह। साहन्मनीडिति। श्रवणमननाभ्यां प्रमेयासंभावनानिरासेपि चित्तस्यानेकाग्रतादोषः प्रतिबंधकः संभवति। तदपनयनाय योगोनुष्ठेय उपदिश्यत इत्यर्थः। ज्ञायते। नेकार्थ इति व्युत्पत्त्या ज्ञानशब्देन श्रोत्राद्युच्यत इत्याह। ज्ञानेति। यदनुगतानि संकल्पाद्यात्मकं यदंतःकरणं तेनानुगतानि तेनांतःकरणेन सहावतिष्ठंते निवृत्तव्यापाराणि भवंतीत्यन्वयः। बुद्धिश्चेति। येन येनेन्द्रियेण सह हृता विषयपरिच्छेदाय प्रभवति तेन तेन सहावतिष्ठते निवृत्तव्यापारा भवतीत्यर्थः। चकाराद्गम्यते। परमांगतिमित्युत्कृष्टफलसाधनत्वात्परमत्वं। वियोगमेव संतं योगमिति विरुद्धलक्षणयामन्यंत इत्युक्तं तत्स्फुटयति सर्वानर्थेति। यद्यद्ब्रह्म घटादितत्तदहं न भवामि यथा तथास्मिन्नपि संघाते यद्यत् दृश्यं तत्तदहं न भवामि किंतु पूर्णं ब्रह्मास्मीत्ये

साहन्मनीत्कथं प्राप्यत इति तदर्थो योग उच्यते। यदायस्मिन्काले स्वविषयेभ्यो निवर्तितान्यात्मन्येव पंचज्ञानानि ज्ञानार्थत्वाच्छ्रोत्रादीन्द्रियाणि ज्ञानान्युच्यंते। अवतिष्ठंते सह मनसा यदनुगतानि तेन संकल्पादिव्यावृत्तेनांतःकरणेन बुद्धिश्चाध्यवसायलक्षणा न विचेष्टति स्वव्यापारेषु न विचेष्टतेन व्याप्रियते तामाहुः परमागतिं। तामीदृशीमवस्थां योगमिति मन्यंते वियोगमेव संतं सर्वानर्थसंयोगवियोगलक्षणाद्धीयमवस्थायोगिन एतस्यां ह्यवं

यदापंचावतिष्ठंते ज्ञानानि मनसा सह॥ बुद्धिश्च न विचेष्टति तामाहुः परमांगतिं॥
तांयोगमिति मन्यंते स्थिरामिंद्रियधारणां॥ अप्रमत्तस्तदा भवति योगोहि प्रभवाप्ययौ॥

स्थायामविद्याध्यारोपणवर्जितः स्वरूपप्रतिष्ठ आत्मा स्थिरामिंद्रियधारणामचलामिंद्रियधारणां बाह्यांतःकरणानां धारणामित्यर्थः। अप्रमत्तः प्रमादवर्जितः समाधानं प्रति नित्यं यत्नवांस्तदा तस्मिन्काले यदैव प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते॥ नहि बुद्ध्यादिचेष्टाभावे प्रमादसंभवोस्ति तस्मात्प्रागेव बुद्ध्या

वमाकारवृत्तौ चित्तं योजयेन्नचित्तं विषयेषु विक्षिप्तं चेत्स्याद्विषयदोषदर्शनेन व्यावर्त्तयेद्यावृत्तं रागादिमच्चेत्स्यात्सापिकषायावस्था ततो निरुद्धं मनो यदा न जागर्त्ति न स्वपिति न चांतराला वस्थं भवति। न च रसस्वादयुक्तं। पूर्णब्रह्मावभासकतयैव क्षीणं भवति तदा सर्वेभ्योनर्थेभ्यो वियोगः संबंधः एवं लक्षणं स्वरूपं यस्यास्तादृशी भवतीत्यर्थः हिशब्दो वेदांतप्रसिद्ध्यवद्योतकः। अस्या अवस्थायाः प्रयोजनमाह। एतस्यामिति। लयविक्षेपकषायरसस्वादवर्जितायामात्मा ज्ञातुं शक्यत इति शेषः। कथंभूतः आत्मेत्यत आह। अविद्याध्यारोपणेति। क्वचिदविद्याध्यारोपणवर्जितास्वरूपप्रतिष्ठा आत्मन इति पाठांतरं॥ पूर्वोक्तामवस्थां विशिनष्टि स्थिरामिति।। योगारंभकाले प्रमादवर्जनं श्रुतिर्विधत्त इत्याह। अप्रमत्त इति। सामर्थ्यादिति। प्रमादवर्जनमंतरा योगस्य दुष्प्रापत्वादित्यर्थः। ननु योगोत्तरकाल एव प्रमादो विधीयतामित्याशंक्याह॥ नहीत्यादिना॥६

अभावइतिपदच्छेदः। योगारंभकालेप्रमादवर्जनंविधेयतयाव्याख्यायानुवादपरतयाव्याचष्टे। अथवेति। विधिपक्षेहेतुंपृच्छति॥ कुतइति। उत्तरमंत्रमवतारयितुंशंकामुद्भावयति। बुद्ध्यादिचेष्टाविषयंचेदिति। घटोस्तीतिप्रतिपन्नस्यघटस्यमुद्गरप्रहाराद्विलापनेघटाकारएवप्रविलीयते। नास्तित्वांशस्तस्यकपालादावप्यनुवृत्तिदर्शनादतःकार्यप्रविलापस्यास्तित्वनिष्ठत्वान्नशून्यतापर्यवसायीलयइत्यस्मिन्क्रमेतत्स्फुटयति। तथाहीति। स्थूलस्यकार्यस्यविलयेसूक्ष्मंतत्कारणमवशिष्यतेतस्यापिविलयेततःसूक्ष्ममितियावद्दर्शनव्याप्तिमुपलभ्ययत्रनदृश्यतेतत्राप्यमूर्त्तविषयत्वावश्यंभावित्वात्सन्मात्रमेवामूर्त्तमवतिष्ठतइतिकार्यमेवसूक्ष्मतारतम्य

अथवायदैवेंद्रियाणांस्थिराधारणातदानीमेवनिरंकुशमप्रमत्तत्वमित्यतोभिधीयतेअप्रमत्तस्तदाभवतीति। कुतोयोगोहियस्मात्प्रभवाप्ययौउपजनापायधर्मकइत्यर्थः। अतोऽपायपरिहारायाप्रमादःकर्त्तव्यइत्यभिप्रायः। बुद्ध्यादिचेष्टाविषयंचेद्ब्रह्मेदंतदितिविशेषतोगृह्येत। बुद्ध्याद्युपरमेचग्रहणकारणाभावादनुपलभ्यमानंनास्त्येवब्रह्मयद्धिकरणगोचरंतदस्तीतिप्रसिद्धंलोकेविपरीतंचासदित्यतश्चानर्थकोयोगोऽनुपलभ्यमानत्वाद्वानास्तीत्युपलब्धव्यंब्रह्मेत्येवंप्राप्तइदमुच्यते। सत्यं। नैववाचानमनसाचक्षुषानान्यैरपींद्रियैःप्राप्तुंशक्यतइत्यर्थः। तथाहिसर्वविषयरहितोपिजगतोमूलमित्यवगतत्वादस्त्येवकार्यप्रविलापनस्यास्तित्वनिष्ठत्वात्। तत्रहीदंकार्यसूक्ष्मतारतम्यपारंपर्येणानुगम्यमानंसद्बुद्धिनिष्ठामेवावग

नैववाचानमनसाप्राप्तुंशक्योनचक्षुषा॥ अस्तीतिब्रुवतोन्यत्रकथंतदुपलभ्यते॥

मयति। यदापिविषयप्रविलापनेनप्रविलाप्यमानाबुद्धिस्तदापिसासत्प्रत्ययगर्भैवविलीयते॥ बुद्धिर्हिनःप्रमाणंसदसतोर्याथात्म्यावगमेमूलंचेज्जगतोनस्यादसदन्वितमेवेदंकार्यमसदित्येवंगृह्येतनत्वेतदस्तिसत्सदित्येवगृह्यते। यथामृदादिकार्यंघटादिमृदाद्यन्वितं। तस्माज्जगतोमूलमात्मास्तीत्येवोपलब्धव्यः। कस्मात्। अस्तीतिब्रुवतोऽस्तित्ववादिनआगमार्थानुसारिणःश्रद्दधानादन्यत्रनास्तिकवादिनिनास्तिजगतोमूलमात्मानिरन्वयमेवेदंकार्यमभावांतंप्रलीयतइतिमन्यमानेविपरीतदर्शिनिकथंतद्ब्रह्मतत्त्वमुपलभ्यतेनकथंचनउपलभ्यतइत्यर्थः। तस्मादपोह्यासद्वादिपक्षमासुरमस्तीतिएवोपलब्धव्यः॥ सत्कार्योबुद्ध्याद्युपाधिर्यदातुतद्रहितोऽविक्रियआत्माकार्यंचकारणव्यतिरेकेणनास्ति॥ ॥ ॥ ॥

पारंपर्येणानुभूयमानंसत्त्वबुद्धिनिष्ठांपुरुषस्यगमयतीत्यर्थः। ननुयद्दृश्यंतदसद्यथास्वप्नदृश्यमितिव्याप्तिदर्शनादस्तित्वेनदृश्यस्यसर्वस्यासत्त्वात्सद्बुद्धिरपिनास्त्येवेत्याशंक्याह। यदापीति। सद्बुद्धिरपिनास्तीत्येवंप्रत्ययोऽवश्यमभ्युपगंतव्योन्यथानिषेधव्यवहारायोगात्। अंततोगत्वासद्बुद्धिःस्वीकृतास्यादित्यर्थः। ततःकिमित्यतआह। बुद्धिर्हीतिव्यभिचारिष्वपिविशेषेषुसन्मात्रबुद्धेरव्यभिचारदर्शनाद्बुद्धेश्चस्वतःप्रामाण्यात्सन्मात्रंवस्त्वभ्युपगंतव्यमित्यर्थः॥ इतश्चसदेवजगतोमूलंवाच्यमित्याह। मूलंचेति। ननुनास्तियज्जगतोमूलंब्रह्मेत्यवगमेपिप्रतियोगितयाब्रह्मज्ञानसंभवात्किमितिमुमुक्षुणाब्रह्मज्ञानकामेनअस्तीत्येवोपलब्धव्यमित्यतआह। तस्मादिति।

प्रतियोगित्वयाज्ञातस्य निषिद्धत्वादात्मतयाज्ञानं न स्यात् ततो ब्रह्मज्ञानकामेनास्ति मूलं जगत् इत्यवगंतव्यमित्याह। अस्तीति ब्रुवत इत्यादिना। तस्मादस्तीति ब्रुवत इति पाठस्त्व नारूढः। सोपाधिकस्यात्मनो ज्ञानान्मुक्त्यसंभवान्निरुपाधिकज्ञानाय प्रयतितव्यमित्याह। यदा त्विति सोपाधिकस्य प्रथमं स्थिरीभूतस्य तद्द्वारेण लक्ष्यपदार्थावगमे सति क्रमेण वाक्यार्थावगमः संभवतीत्याह। तत्राप्युभयोरित्यादिना। स दुपलभ्यमानं कार्यमुपाधिर्यस्य कारणत्वस्य तत्कृतोस्तित्वप्रत्ययः कारणत्वादस्ति परआत्मेत्युपल ब्धस्येति योजना सर्वे कामा इति प्रवृत्तकर्मतत्फलोपस्थापिते शारीरस्थितिनिमित्तान्नपानादौ प्रवृत्तिकारणेच्छाव्यतिरिक्ताः सर्वे कामाः काम्येन ज्योतिष्टोमादिना स्वर्गं प्राप्

वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमिति श्रुतेः। तदा तस्य निरुपाधिकस्यालिंगस्य सदसदादिप्रत्ययविषयत्ववर्जितस्यात्मनस्तत्त्वभावो भ वति नेनच रूपेणात्मोपलब्धव्य इत्यनुवर्तते। तत्राप्युभयोः सोपाधिकनिरुपाधिकयोरस्तित्वतत्त्वभावयोर्निर्धारणार्थेषष्ठी। पूर्वमस्तीत्येवोपलब्धस्या त्मनः सत्कार्योपाधिकृतास्तित्वप्रत्ययेनोपलब्धस्येत्यर्थः। पश्चात्प्रत्यस्तमितसर्वोपाधिरूप आत्मनस्तत्त्वभावो विदिताविदिताभ्यामन्यो ऽद्वयस्व भावो नेति नेतीत्यस्थूलमनणु अह्रस्वमदृश्ये ऽनात्म्ये ऽनिलयन इत्यादिश्रुतिनिर्दिष्टः प्रसीदति अभिमुखीभवति। आत्मप्रकाशनाय पूर्वमस्ती त्युपलब्धवत इत्येतदेवं परमार्थदर्शिनो यदा यस्मिन्काले सर्वे कामाः कामयितव्यस्यान्यस्याभावात् प्रमुच्यंते विशीर्यंते ये ऽस्य प्राक्प्रतिबोधाद्विदुषो

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः॥ अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति। यदा सर्वे प्रमुच्यंते
कामा येऽस्य हृदि श्रिताः॥ अथ मर्त्यो ऽमृतो भवत्यत्र ब्रह्म समश्नुते। यदा सर्वे प्रभिद्यंते हृदयस्येह ग्रंथयः॥ ॥

हृदि बुद्धौ श्रिता आश्रिताः। बुद्धिर्हि कामानामाश्रयो नात्मा। कामः संकल्प इत्यादिश्रुत्यंतराच्च। अथ तदा मर्त्यः प्राक्प्रबोधादासीत्स बोधोत्तरकाल मविद्याकामकर्मलक्षणस्य मृत्योर्विनाशादमृतो भवति गमनप्रयोजकस्य मृत्योर्विनाशाद्गमनानुपपत्तेरत्रेहैव प्रदीपनिर्वाणवत्सर्वबंधनोपशमाद्ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः॥ कदा पुनः कामानां मूलतो विनाश इत्युच्यते। यदा सर्वे प्रभिद्यंते भेदमुपयांति विनश्यंति हृदयस्य बुद्धेरिह जीवत एव ग्रंथयो ग्रंथिवद्दृढबंधनरूपा अविद्याप्रत्यया इत्यर्थः। अहमिदं शरीरं ममेदं धनं सुखी दुःखी चाहमित्येवमादिलक्षणास्तद्विपरीतब्रह्मात्मज्ञा नाद्ब्रह्मैवास्म्यसंसारीति विनष्टेष्वविद्याग्रंथिषु तन्निमित्तकाः कामा मूलतो विनश्यंति॥ ॥ ॥ ॥ ॥

स्वामीति त्रिपुर्याराधनेन जनं च वशीकरिष्यामीत्येवमादयः स्वर्गादिदेहेष्वहमेव तिष्ठामि भोगश्च प्राप्ते विषये ऽप्राप्तविषयश्च कामो ऽप्यर्थो मिथ्या चासावितिविचारेण विशीर्यंत इत्यर्थः। कामाद्याश्रय आत्मेति वैशेषिकमतं श्रुतिबाह्यत्वादनादरणीयमित्याह॥ बुद्धिर्हीति॥ कामप्रविलयस्य सुषुप्तेपि भावादमृतत्वज्ञापकत्वं न संभव तीति मत्वाह। कदा पुनरिति॥ अविद्याप्रत्ययान्विशिनष्टि। अहमिदमित्यादिना। आत्मप्रत्ययेन तन्नाशं दर्शयन् कामोच्छित्तिमाह। तद्विपरीतेत्यादिना ॥ ॥ ॥

इतिप्रश्नयोपजननादितिसंबंधः। अथतदेत्यर्थः। उपदिश्यतइतिन्युत्पत्त्याप्रत्यगभिन्नःपरमात्माभिधीयते॥ प्रकरणविच्छेदोक्तस्यसंबंधंदर्शयति। निरस्ताशेषेत्या
दिना। निरस्ता अशेषविशेषा यस्मात्तथा तच्चतद्व्यापिचतदेवब्रह्मतस्यात्मत्वेनप्रतिपत्तिरुपलब्धिस्तयाप्रभिन्नाः समस्ताअविद्याकामकर्मादयएवग्रंथयोयस्मात्स



अथमर्त्योऽमृतोभवत्येतावद्धेतावदेवएतन्मात्रंनाधिकमस्तीत्याशंकाकर्त्तव्या। अनुशासनमनुशिष्टिरुपदेशः सर्ववेदांताना
मितिवाक्यशेषः। निरस्ताशेषविशेषव्यापिब्रह्मात्मप्रतिपत्त्याप्रभिन्नसमस्ताविद्याग्रंथेर्जीवतएवब्रह्मभूतस्यविदुषोनगतिर्वि
द्यतेइत्युक्तं। अत्रब्रह्मसमश्नुतइत्युक्तत्वान्नतस्यप्राणा उत्क्रामंतिब्रह्मैवसन्ब्रह्माप्येतीतिश्रुत्यंतराच्च। येपुनर्मंदब्रह्मविदो
विद्यांतरशीलिनश्चब्रह्मलोकभाजः येचतद्विपरीताःसंसारभाजस्तेषामेषगतिविशेषउच्यते। प्रकृतोत्कृष्टब्रह्मविद्याफलस्तुतये। किं
चान्यदग्निविद्यापृष्टाप्रत्युक्ताचतस्याश्चफलप्राप्तिप्रकारोवक्तव्यइतिमंत्रारंभः। तत्रशतंचशतसंख्याकाएकाचसुषुम्णानाम
पुरुषस्यहृदयाद्विनिःसृताःनाड्यःशिरास्तासांमध्येमूर्द्धानंभित्वानिःसृतानिर्गतासुषुम्णानामतयांतकालेहृदयेआत्मानंवशी

अथमर्त्योऽमृतोभवत्येतावदनुशासनं॥ शतंचैकाचहृदयस्यनाड्यस्तासांमूर्द्धानमभिनिःसृतैका॥
तयोर्ध्वमायन्नमृतत्वमेतिविष्वङ्ङन्याउत्क्रमणेभवंति॥ अंगुष्ठमात्रःपुरुषोंतरात्मासदाजनानांहृदयेसं
निविष्टः। तंस्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकांधैर्येणतंविद्याच्छुक्रममृतंतंविद्याच्छुक्रममृतमिति॥ ॥

कृत्ययोजयेत्। तयानाड्याऊर्ध्वमुपरिआयन्गच्छन्नादित्यद्वारेणामृतत्वममरणधर्मत्वमापेक्षिकमाभूतसंप्लवंस्थानममृतत्वंहिभाष्य
तइतिस्मृतेः। ब्रह्मणासहकालांतरेणमुख्यममृतत्वमेतिभुक्त्वाभोगाननुपमानब्रह्मलोकगतान्विष्वङ्नानाविधागतयोऽन्यानाड्यउ
त्क्रमणेनिमित्तंभवंतिसंसारप्रतिपत्त्यर्था एवसंभवंतीत्यर्थः॥ इदानींसर्ववल्ल्यर्थोपसंहारार्थमाह। अंगुष्ठमात्रःपुरुषोंतरात्मासदा
जनानांसंबंधिनिहृदयेसंनिविष्टः यथाव्याख्यातस्तंस्वादात्मीयाच्छरीरात्प्रवृहेदुद्यच्छेन्निष्कर्षेत्पृथक्कुर्यादित्यर्थः। किमिवेत्युच्यते
मुंजादिवेषीकामंतस्थांधैर्येणाप्रमादेनतंशरीरान्निष्कृष्टंचिन्मात्रंविद्याद्विजानीयाच्छुक्रममृतंयथोक्तंब्रह्मेतिद्विर्वचनमुपनिषत्परि
समाप्त्यर्थमितिशब्दश्च। विद्यास्तुत्यर्थोयमाख्यायिकार्थोपसंहारोधुनोच्यते॥

तयोक्तस्तस्य आत्मानंदेहमधिकृत्यवर्त्ततइत्यध्यात्मंप्रत्यक्स्वरूपंब्रह्मप्राप्यविमृत्युर्भवतिनान्यत्रूपमर्चिरादिमार्गगम्यं॥ ॥ ॥ ॥ ॥

प्राप्य संयोगस्य वियोगावसानत्वादित्यर्थः॥ विद्याअग्रहणनिमित्तः शिष्यस्य दोषः विद्याप्रतिपादनं प्रदानं शिष्येभ्यस्तन्निमित्त आचार्यस्य दोषस्तदुभयप्रशमनार्थेत्यर्थः। कर्त्ता कइत्याकांक्षायां प्रकरणादीश्वरइत्याह॥ स एवेति। तेजस्विना वित्येकं पदं षष्ठ्यर्थे व्याख्यायनावितिपदं छित्वा तृतीयार्थे व्याख्यानपूर्वकं तेजस्विपदमधीतमित्यस्य विशेषणं करोति॥ अथ वेत्यादिना॥ सर्वदोषेति॥ अध्यात्मिकाधिभौतिकाधिदैविकदोषप्रशमनार्थमित्यर्थः॥ ॥ॐशब्दो मंगलप्रयोजनः कृत्स्नोपनिषद्

३४

मृत्युप्रोक्तां यथोक्तामेतां ब्रह्मविद्यां योगविधिं च कृत्स्नं समस्तं सोपकरणं सफलमित्येतत् नचिकेतो वरप्रदानान्मृत्योर्लब्ध्वा प्राप्येत्यर्थः॥ किं ब्रह्म प्राप्तोऽभून्मुक्तोऽभवदित्यर्थः। कथं विद्याप्राप्त्या विरजो विगतधर्माऽधर्मो विमृत्युर्विगतकामाविद्यश्च सन्पूर्वमित्यर्थः॥ न केवलं नचिकेता एवान्योपि नचिकेतोवदात्मविदध्यात्ममेव निरूपचरितं प्रत्यक्स्वरूपं प्राप्य तत्वमेवेत्यभिप्रायः नान्यद्रूपमप्रत्यकूरूपं तदेवमध्यात्मसुक्तः प्रकारेण वेदविजानाति॥ इत्येवंवित्सोपि विरजाः सन्ब्रह्मप्राप्त्या विमृत्युर्भवतीति वाक्यशेषः॥ शिष्याचार्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषप्रशमनार्थेयं शांतिरुच्यते॥ सह नाववामवतु पालयतु विद्यास्वरूपप्रकाशनेन। कः स एव परमेश्वर उपनिषत्प्रकाशितः

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नं॥ ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योप्येवं यो विदध्यात्ममेव॥ सह नाविति शान्तिः॥३॥ ॥इति कठवल्ल्यां द्वितीयाध्याये तृतीयाध्याये तृतीया वल्ली समाप्तिमफाणीत्॥ ॥ ध्या

किंच सह नौ भुनक्तु तत्फलप्रकाशनेन नौ पालयतु। सहैवावां विद्याकृतं वीर्यसामर्थ्यं करवावहै निष्पादयावहै किंच॥ तेजस्विनौ तेजस्विनोरावयोर्यदधीतं तत्स्वधीतमस्तु॥ अथवा तेजस्विना वावाभ्यां यदधीतं तदतीव तेजस्वि वीर्यवदस्त्वित्यर्थः॥ माविद्विषावहै शिष्याचार्यावन्योन्यं प्रमादकृतान्यायाध्ययनाध्यापनदोषनिमित्तं द्वेषं माकरवावहै इत्यर्थः॥ शान्तिः शान्तिः शान्तिरिति त्रिर्वचनं सर्वदोषोपशमनार्थमित्योमिति॥ ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविंदभगवत्पूज्यपादशिष्यश्रीशंकरभगवतः कृतौ कठोपनिषद्भाष्ये द्वितीयाध्याये षष्ठी वल्ली समाप्ता

र्थस्मारक इति शब्दो भाष्यसमाप्तिद्योतनप्रयोजन इति बोध्यम्॥ कठवल्लीभाष्यटीका कृता गोपालयोगिना॥ अनया प्रीयतां देवो दक्षिणाशाः सुखं शिवः॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमद्बालगोपालेंद्रयतीश्वरविरचिते कठवल्लीभाष्यविवरणे अंतिमवल्ली समाप्ता॥ संवत्॥१९३०॥ मार्गशीर्षशुक्ल ४ गणेशपंतेन लिखितं २४६०॥ वाराणसीप्रसादस्य नियोगेन तु यत्नतः॥ काशीसंस्कृतमुद्रायामङ्कितो यं शिलाक्षरैः॥१॥ श्रीकाशीजीमेंज्ञानवापीके पूर्वफाटकपर श्रीविश्वनाथजीके पास श्रीपुरुषोत्तम महाराजशिवलाल दुबेजीके मकानमें यह पुस्तक मिलेगा अथवा कचौरीगलीमे भाई प्रतापसिंहजीके दुकानपर मिलेगा।

